लिङ्गस्वरूपनिर्णये चातीव विवदमानो महाभाष्यकारस्तत्र तत्र प्राचीनानामाशयोपबृंहितं वाक्यजातमुद्धृत्य विमृशति । विशिष्य च खट्वा-वृक्षयोः शब्दयोः स्त्रीलिङ्गपुल्लिङ्गावबोधकं कारणमपश्यन् 'तदभावे नपुंसक-मि'त्यनेन नपुंसकत्वस्यैव तयोर्न्याय्यतामाह । तथापि संस्कृते सोऽयं स्तन-केशवतीत्यादिन्यायो दुस्सञ्चार इति विदन्नेवायं लिङ्गस्य लोकाश्रयत्वमपि कात्यायनाभिप्रेतं तदीयवाक्योद्धरणेनैव न्यरूपयत्—"न चैतन्मन्तव्यं स्वमनीषिकयैवोच्यत इति । पठिष्यति ह्याचार्यो लिङ्गमशिष्यं लोकाश्रयत्वा-ल्लिङ्गस्येति" इति । महाभाष्यकारोऽपि स्वजीवितकाले न कमपि लिङ्गानुशास-नग्रन्थं स्मरति । तस्मात् लिङ्गप्रतिपत्तिनियामिका सामान्यव्यवस्था संस्कृत-भाषायां पदेषु बहुत्र व्यभिचरति । कुतः ? तत्र हि लिङ्गव्यवस्था कृत्रिमा कष्टा च दृश्यते । तथाहि—(१) शिला नगरी भूमिः इत्यादयः शब्दा जडपदार्थवाचका नपुंसकार्हा अपि स्त्रीलिङ्गाः, तथैव पाषाणः आहारः इत्यादयः पुल्लिङ्गाश्च दृश्यन्ते । (२) भार्यावाचको दारशब्दः पुल्लिङ्गः, कळत्रं नपुंसकम् । (३) किञ्च, विशेष्यगतं लिङ्गं विशेषणेऽप्यारोप्यते । तद्यथा—वृक्षशब्दो विशेष्यो नियतपुल्लिङ्गः । बहुवृक्षा पुष्पवाटी, बहुवृक्ष-मुद्यानम्, इत्यादौ विशेषणावस्थायां विशेष्यनिघ्नं भवति लिङ्गम् ।

लिङ्गसम्प्रतिपत्तावीदृशमनियतं कष्टं विभाव्य पारोवर्यविदः करुणा-विष्टचेतस आचार्याः प्राञ्चः संस्कृतवाङ्मयमहार्णवं सर्वङ्कषप्रसरेण स्वबुद्धि-मन्दरेण विलोड्य लिङ्गानुशासनामृतम्, सुकुमारमतीनामपि सुखपानक्षमम्, समधिगतव्याकरणशास्त्रमर्यादेभ्यस्तृषितेभ्यो विबुधेभ्यः समर्पितवन्तः । तदेवं निसर्गदुरासदे लिङ्गनिर्णयमहादुर्गे सुखप्रवेशक्षमं द्वारमेकमपावृतं प्राचीनैः ।

अद्यत्वे पुनर्लभ्यमानेषु लिङ्गविज्ञानीयेषु ग्रन्थेषु मध्ये पाणिन्युपज्ञ-मिति प्रथितम्, तदीयाष्टकशरीरस्याङ्गभूतेषु पञ्चसु (शिक्षा-धातुपाठ—गणपाठ-ऽक्षरसमाम्नाय—लिङ्गानुशासनानि) परिशिष्टेष्वन्यतमं यत्तदेव निस्संशयं

नितुरां प्राचीनम् । एतावत्पर्यन्तं लिङ्गमात्रतन्त्रेष्वस्माभिर्विदितास्त्विमे भवन्ति—

१. पाणिनीयं लिङ्गानुशासनम् ।

२. वररुचिकृता लिङ्गवृत्ति· (लिङ्गविशेषवृत्तिः लिङ्गविशेषविधिः लिङ्गानुशासनं वा) ।

३. लिङ्गादिसंग्रहटिप्पणी रामनाथ-विद्यावाचस्पतिविरचिता ।

४. वामनकृतं लिङ्गानुशासनम् ।

५. जैनाचार्य--हेमचन्द्रप्रणीतं लिङ्गानुशासनम् ।

६. यक्षवर्मकृता तस्य टीका ।

७. लिङ्गकारिकाः (गणरत्नमहोदधौ वर्धमानेनोद्धृताः) ।

८. लिङ्गकारिकाः चन्द्रगोस्वामिप्रणीताः (पुरुषोत्तमेनोद्धृताः) ।

९. लिङ्गशास्त्राणि (पञ्च शाश्वतेन स्वकोशोपोद्घाते स्मृतानि) ।

१०. शान्तनवाचार्यप्रणीतं लिङ्गानुशासनम् ।

११. शाकटायनकृतं लिङ्गानुशासनम् ।

१२. जयानन्दसूरिकृतो लिङ्गानुशासनवृत्त्युद्धारः ।

१३. हर्षवर्द्धनकृतं लिङ्गानुशासनम् ।

१४. जैनाचार्य-हेमचन्द्रकृतं लिङ्गानुशासनविवरणम् ।

१५. वल्लभकृता विवरणव्याख्या ।

१६. लिङ्गानुशासनवृत्तिः दुर्गकृता (दुर्गसिंहः ?) ।

१७. बुद्धिसागरकृतं लिङ्गानुशासनम् ।

१८. नन्दिकृतं लिङ्गानुशासनम् ।

१९. अरुणदेवकृतं लिङ्गानुशासनम् ।

२०. भोजदेवकृतं लिङ्गानुशासनम् ।

२१. लिङ्गनिर्णयः ।

२२. लिङ्गनिर्णयभूषणम् ।

२३. लिङ्गप्रबोधः ।

उपरि निर्दिष्टेषु ग्रन्थेषु पाणिनीयं लिङ्गानुशासनं सव्याख्यं सिद्धान्तकौमुदीपारिशिष्टरूपेण मुम्बय्यां प्रकाशितचरम् । तस्य हि भट्टोत्पल-भट्टोजि—रामचन्द्र—तारानाथतर्कवाचस्पतिभिः प्रणीताश्चतस्रो भिन्ना व्याख्याः सन्तीति विज्ञायते । वामनकृतं लिङ्गानुशासनं सव्याख्यं वटोदरपुरराजकीय-संस्कृतग्रन्थावल्यामवतार्य प्रकाशितम् । आचार्यहेमचन्द्र वररुचि-शाकटा-यन--हर्षवर्द्धनकृतानि तु लिङ्गानुशासनानि मूलमात्राणि शर्मण्यभाषा-नुवादसहितानि शर्मण्यदेशीयेन ओट्टो फ्राङ्के इत्याख्येन विदुषा १८९० तमे कैस्तवहायने स्वकीये देशे मुद्रयित्वा प्रसिद्धीकृतानि ।

### हर्षवर्द्धनः लिङ्गानुशासनं च

अस्य हि लिङ्गानुशासनस्य कर्त्ता श्रीवर्द्धनतनयो हर्षवर्द्धन इति, स च व्याडि-शङ्कर-चन्द्र-वररुचि-विद्यानिधि-पाणिनिविरचितान् लिङ्गवि-धीन् सम्यक् पर्यालोच्येमं ग्रन्थं प्रणिनायेति च, ग्रन्थान्तिमपद्याद्विज्ञायते । तथाहि तत्पद्यम्—

"व्याडेः शङ्करचन्द्रयोर्वररुचेर्विद्यानिधेः पाणिनेः
सूक्तान् लिङ्गविधीन् विचार्य सुगमं श्रीवर्द्धनस्यात्मजः ।
श्रव्यं व्यापि च हर्षवर्द्धन इदं स्पष्टीकृतप्रत्ययं
लिङ्गानामनुशासनं रचितवानत्यर्थसंसिद्धये ॥"

इति । पद्येऽस्मिन् स्मृतेषु लिङ्गविज्ञानीयेषु ग्रन्थेषु केचित् सिलिन्ध्रनाशं नष्टाः, अन्ये च सुमेरव इवाद्याप्यक्षोभ्या वर्त्तन्ते । दाक्षीपुत्रस्य पाणिनेस्तन्त्रं दाक्षायणत्वेन स्वमातृभ्रातृव्य एव व्याडिराचार्यो लक्ष-श्लोकात्मकेन सङ्ग्रहाख्येन ग्रन्थेन प्रपञ्चितवानिति प्रथास्ति । ऋग्वेदप्राति-

शाख्यकारो भगवान् शौनकोऽपि व्याडिमेकं बहुत्र स्मरति । विकृतिवल्ल्याख्यस्य च कस्यचन ग्रन्थस्य कर्त्ता व्याडिरिति स्मर्यते । व्याडिग्रन्था लुप्ताः । शङ्कर-विद्यानिधी च नास्माभिर्विदितचरौ ।

अयं च हर्षवर्द्धनो विशेषतः क्त्यः कदा बभूवेत्यादिकं त्वनवगतम् । परन्तु शर्मण्यदेशीयः स पण्डित., अन्ये च तत्पक्षपातिनः केचन, श्रीशब्दोपस्कृतं श्रीवर्द्धनपदं पद्यदृष्टमेकदेशग्रहणन्यायेन प्रभाकरवर्द्धनाभिप्रायपरमिति निरूपयन्तः 'वर्णाश्रमव्यवस्थापनप्रवृत्तचक्रः परमादित्यभक्तः परमभट्टारकमहाराजाधिराजश्रीप्रभाकरवर्द्धनः, तस्य पुत्रस्तत्पादानुध्यातः परमसौगतः सुगत इव परहितैकरतः सत्पथोपार्जितानेकद्रविणभूमिप्रदानसम्प्रीणितार्थिहृदयः श्रीयशोमत्यामुत्पन्नः परमभट्टारकमहाराजाधिराजश्रीराज्यवर्धन., तस्यानुजस्तत्पादानुध्यातः परममाहेश्वरः महेश्वर इव सर्वसत्त्वानुकम्पी सितयशःप्रतानविच्छुरितभुवनमण्डलः परमभट्टारकमहाराजाधिराजश्रीहर्षः' इति ताम्रशासनादिष्वभिष्टुतः, प्रथमं स्थाण्वीश्वराधिपतिरनन्तरं कान्यकुब्जाधिपतिरिति विदितः, प्रसिद्धगद्यकवेर्बाणस्याश्रयश्च यः श्रीहर्षदेवः, यस्य च राज्यभरणकालः (क्रै. ६०२—६४७) संस्कृतसाहित्यस्य सुवर्णकाल आसीदिति निश्चितं पुरावृत्तविमर्शकैः ; स एवास्य कर्त्तेति न्यवेदयन् । यूरोपदेशीयः संस्कृतपण्डितः कीत्महाशयोऽपि इममेवाभिप्रायमङ्गीकृत्य नचिरादेव प्रसिद्धीकृते स्वकीये संस्कृतभाषासाहित्यचरिते (१९२९) प्रस्तुतवान् ।

परं त्वत्रेदं चिन्त्यं भाति । लिङ्गानुशासनव्याख्यानस्योपोद्घाते व्याख्याकारः पृथिवीश्वरो मूलग्रन्थकर्त्रा पादग्रहणपूर्वकं प्रार्थितः सन् लिङ्गानुशासनव्याख्यां स्वयं कर्त्तुमारब्ध इति प्रस्तौति । तथाहि—

"प्रार्थितः शास्त्रकारेण पादग्रहणपूर्वकम् ।
लिङ्गानुशासनव्याख्यां करोति पृथिवीश्वरः ॥"

इति । महोन्नतमहामहिमश्रीयुतः कश्चित् सार्वभौमः स्वप्राभवं स्थानं चाविगणय्य पण्डितमेकं स्वग्रन्थस्य व्याख्याकरणाय पादं गृहीत्वा प्रार्थयामासेतीदम्, काव्यस्यार्थकृत्त्वमुपपादयतः काव्यप्रकाशकारस्य "श्रीहर्षादेर्धावकादीनामिव धनम्" इति वाक्यमिवासमञ्जसमनाशास्यं च दृश्यते । तस्मात् नरवर्द्धनवंशोत्पन्नो हर्षवर्द्धनचक्रवर्त्ती ग्रन्थस्यास्य कर्त्ता भवितुमर्हति वा न वेति संशयस्य निश्चायकं किमप्यन्यत्प्रमाणं नास्ति । कीत्‌महाशयश्चास्मिन् विषयेऽस्माभिः पत्रमुखेन सम्भावितः विनैव साधकं बाधकं वा प्रमाणम् एवं प्रतिव्याहरति स्म—

"कान्यकुब्जाधिपतौ हर्षवर्द्धने लिङ्गानुशासनकर्तृत्वाध्यारोपो विन्टरनिट्स्महाशयेनाङ्गीकृतोऽपि आफ्रड्विपश्चिता न परिगृहीतः । सोऽयं पितुर्नाम्नो व्यत्यस्तत्वादनिश्चयः । तदिदमेव कारणं परिगृह्य आफ्रड्महाशयः कान्यकुब्जाधिपतिरस्य कर्त्ता न प्रत्याय्य इति विप्रवदते स्म । परन्तु, उक्तस्य कालस्याननुगुणं किमपि ग्रन्थशरीरे नास्तीति (भवद्भिरस्मिन् विषये निर्णायकं किञ्चिन्नूतनं प्रमाणं सम्पादित चेत्तद्विना), श्रीवर्द्धन इति प्रभाकरवर्द्धनस्य बिरुदरूपं स्यादिति सम्भावनया च, अयं संवादः, मन्ये, नासाम्प्रतमिति । इतोऽधिकतयात्र किमप्यनुमातुं प्रमाणं नास्ति ।" इति ।

शर्मण्यदेशीयपण्डितेन तेन विविधं लिङ्गानुशासनप्रस्थानम्, तेषां पूर्वापरीभावः, एकैकस्य च प्रस्थानस्य पूर्वेषां प्रस्थानैः कियदुपकृतम्, इत्यादिकम्, हर्षवर्द्धनस्य लिङ्गानुशासनकर्तृषु महीयसीं प्रतिष्ठां चाश्रित्य सुदीर्घमुपन्यस्तमेवेति तन्नात्र पुनश्चर्व्यते । परन्तु तदिदं सर्वं सङ्ग्रहेणावधारयितुं पट्टिकारूपेण केवलमस्माभि प्रदर्श्यते ।




लिङ्गानुशासनं नामामुकस्य शब्दस्यामुकं लिङ्गमित्यनुशासनम्; यद्वा लिङ्गानां स्त्रीपुन्नपुंसकानामधिकृतानामनुशासनं यत्र तत्; अथवा लिङ्गमनुशिष्यते येन तच्छास्त्रम्। लिङ्ग्यते ङीब्टाबादिभिर्व्यज्यत इति लिङ्गं स्त्रीपुन्नपुंसकम्, तस्यानुशासनं शास्त्रम्। अनुशिष्यतेऽनेनेति करणव्युत्पत्तिः। तदिदं लिङ्गानुशासनं वाङ्मलानां चिकित्सितेष्वन्यतमम्। पाणिनीयं व्याकरणतन्त्रप्रस्थानमास्पदीकृत्यैव पूर्वाचार्यैर्लिङ्गान्यनुशिष्टानि। लिङ्गमनुशासितुं च तैर्महान् यत्न आस्थितः। भूमि-विद्युत्-लता-सरितां पर्यायाः स्त्रीलिङ्गाः, पर्वत-वृक्ष-समुद्रादीनां पर्यायाः पुल्लिङ्गाः, मुख-जल-कमलादीनां पर्याया नपुंसकलिङ्गाः, घञ्प्रत्ययान्ताः पुल्लिङ्गाः, क्तिन्प्रत्ययान्ताः स्त्रीलिङ्गा, ल्युट्प्रत्ययान्ता नपुंसकलिङ्गाः, इत्यादिभिरुच्चावचैः कैश्चन सामान्यनियमैः, क्वचिदंशे देश्यभाषासामान्येन, सामान्यविधिष्वनन्तर्भूतानां शब्दानां पृथक् परिगणनेन, अन्यैश्च कैश्चिदाञ्जसैर्मार्गैः तैर्लिङ्गान्यनुशिष्टानि। इदमेव च प्रस्थानं सामान्यतः प्रकारभेदेन सर्वैरप्याचार्यैर्मतभेदसहितं स्वीयग्रन्थेष्वादृतम्। तथा च व्याडिप्रभृतिभि-

राचार्यैर्विरचितेषु लिङ्गानुशासनविधिषु जाग्रत्सु किमर्थं हर्षवर्धनेन लिङ्गान्यनुशिष्टानीत्याकाङ्क्षायां पूर्वग्रन्थैः स्वग्रन्थस्यागतार्थतां स्वयमेवोपादर्शयत् ग्रन्थकार आरम्भे द्वितीयेन पद्येन । तथाहि तत्पद्यम्—

"मनोहरतमैर्वृत्तैः सज्जनानन्दवर्धनम् ।
लिङ्गानुशासनं स्पष्टं यथाबुद्धि विधीयते ॥"

इति । एवञ्च पूर्वाचार्यैर्व्याडिप्रभृतिभिः सूत्रैर्ग्रन्थविस्तरेण च लिङ्गानामनुशिष्टत्वात् अनायासेन तानि ग्रहीतुं न शक्यन्ते ; अहं पुनः सुखग्रहणार्थं विविधवृत्तनिबद्धपद्यैः पृथक् प्रकरणादिविभागेन च वच्मि ; तस्मान्मदीयस्य ग्रन्थस्य विशेषवत्त्वं व्यापिता च भविष्यतीति तात्पर्यम् । अत्र च पद्ये सज्जनानन्दवर्धनं इतीदं विशेषणम्, यथा हर्षवर्द्धनः सज्जनानन्दवर्द्धनः तथा तदीय लिङ्गानुशासनमपि तथेत्येतदभिप्रायगर्भं प्रयुक्तं वेदितव्यम् । हर्षवर्द्धनेन चाहत्य ९७ कारिकाभिर्महतो वाग्विषयस्य लिङ्गविधिः प्रोक्तः । अत्रानुक्तं सर्वमपि लोकतो विज्ञेयम् । यदसकृत्पठति महाभाष्यकारः—"लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति ।

### पृथिवीश्वरः तस्य व्याख्या च

हर्षवर्द्धनकृतलिङ्गानुशासनस्य व्याख्या चेयं सर्वलक्षणा इति सर्वार्थलक्षणा इति वा व्यपदिष्टा । अस्याश्च कर्त्ता भट्टभरद्वाजसूनुः पृथिवीश्वर इत्यस्माभिः सम्पादितेषु त्रिष्वप्यादर्शेषु प्रकरणसमाप्तिवाक्येभ्योऽवसीयते । सोऽयं पृथिवीश्वरः मूलग्रन्थकारस्य समकालिक इति पूर्वोद्धृतपद्यादनुमीयते । परन्तु शर्मण्यदेशीयपण्डितेन सङ्कलिते असमग्रे कस्मिंश्चिद्व्याख्यानग्रन्थादर्शे व्याख्याकर्त्तुर्नाम भिन्नं दृश्यते । तच्चैवम्—"भट्टदीप्तस्वामिसूनोर्बलवागीश्वरस्य शबरस्वामिनः कृतौ हर्षवर्द्धनकृतलिङ्गानुशासनटीकायाम्" इति । अयं च नामधेयभेदः कथमाविर्भूत इति, भिन्नयोर्नाम्नोर्मध्ये वास्तविकमिदमिति वा, विनिश्चेतुं न किमप्यास्ति

प्रमाणम् । परन्तु, अस्य लिङ्गानुशासनस्योपरि शबरस्वामिना कापि टीका विरचितेति अमरकोशटीकासर्वस्वाद्विज्ञायते । तत्र हि मनुष्यवर्गे ९१ तमकारिकाव्याख्याने (अनन्तशयनसंस्कृतग्रन्थावलिः ग्रन्थाङ्कः ४२) वन्द्यघटीयसर्वानन्द एवं लिखति—"'सक्थ्यस्थिदधिसक्थ्यक्षि' इत्यादिना इदन्तमपि शबरस्वामी पठति" इति । उणादिसूत्रवृत्तिकार उज्ज्वलदत्तोऽपि एकत्र शबरस्वामिवाक्यमुद्धरति । तत्तु वाक्यं प्रकृतटीकायां नोपलभ्यते ।

वैय्याकरणाधिराज्यपदवीसिंहासनाधिष्ठितं पाणिनिं द्रष्टुं प्राचीनैरुद्घाटितं द्वारद्वयं वर्त्तते काशिकाकृतमेकं रूपावतारकृतमन्यदिति । तत्र वामनजयादित्योपनिबद्धं काशिकाप्रस्थानमेव प्रधानतयावलम्ब्य पृथिवीश्वरो व्याख्याकृत्यं निर्वर्त्तयति ; तत्र तत्र पूर्वेषामाचार्याणां पक्षभेदं स्वाभिमतं मतं च सूचयति ; यत्र प्रत्ययादिभिर्लिङ्गं नियमितं तत्र प्रत्ययविधायकं शास्त्रं काशिकाभिमतपाठमुद्धृत्य सोदाहरणं सविशदं प्रतिपादयति ; सङ्क्षिप्तशब्दबद्धाभिर्वाग्भिर्मूलार्थमनुरूपं प्रकाशयति । परन्तु लौकिकसंस्कृतभाषायाः पदानां लिङ्गान्यनुशासितुमारब्धस्य ग्रन्थस्य व्याख्यानाय प्रवृत्तः एकत्र धर्मशब्दस्य नपुंसकतां दर्शयितुम् "तानि धर्माणि प्रथमान्यासन्" इति लौकिकसंस्कृतातिगं वाक्यमुदाजहार इतीदम्, मन्यामहे, व्याख्याकारस्यैकं साहसमिति ।

आदर्शग्रन्थदानेनोपकृतवतां श्रीयुत के. पि. जयस्वाल्महाशयानां ग्रन्थशालाधिकृतानां च बहुकं स्मरामः ।

विश्वविद्यालयः
मद्रपुरम्
२०—६—१९३०

वे. वेङ्कटरामशर्म्मा

# प्रकरणसमुद्देशः

## सूचनाः ।

| | | |
|---|---|---|
| पा० सू० | = | पणिनिसूत्रम् । |
| का० वृ० | = | काशिकावृत्तिः । |
| उ० सू० | = | उणादिसूत्रम् । |
| श. | = | शर्मण्यदेशीयपण्डितेन मुद्रितं पुस्तकम् । |
| हे० | = | हेमचन्द्रकृतं लिङ्गानुशासनम् । |
| का० प्र० उ. | = | काव्यप्रकाशे उल्लासः । |

हर्षवर्द्धनकृतं

# लिङ्गानुशासनम्

पृथिवीश्वरकृतया सर्वलक्षणाख्यया टीकया सहितम् ।

श्रीगणपतये नमः

नमामि नारायणपादपङ्कजं
करोमि नारायणपूजनं सदा ।
वदामि नारायणनाम निर्मलं
स्मरामि नारायणतत्त्वमव्ययम्[1] ॥ १ ॥

भूयाद्भूतपतिर्विभुर्दिविभवो वो भोगभृद्भूषणो
भालाभीलदृगुद्भवोग्रहुतभुग्भारास्तभारो हरः ।
शम्भुः सम्भृतभूतभूरिविभवो भीमः स्वयम्भूद्भवो
भूभृद्भूप्रभुरात्मभक्तभयभिद्भर्गो भृशं भूतये ॥ २ ॥

श्रीमद्भूषणभोगिभो[Folio 1 b]गभवनैर्भूमिप्रभैर्भास्वरै-
र्भ्राजिष्णुद्युतिमत्तदिन्दुवदनं वन्दे सतुन्दं वपुः ।
हैरम्बं[वरसार]दानमुखरै रत्नैरुदारैरलं (?)
दिव्यैश्चारणराक्षसैः सुरगणैर्विघ्नोपशान्त्यै नुतम् ॥ ३ ॥

अरूपं विश्वरूपाख्यमनाद्यन्तमकारकम् ।
प्रपद्ये प्रणवात्मानमलिङ्गासङ्ख्यमव्ययम् ॥ ४ ॥

नमस्यामि जगद्वन्द्यां कृत्स्नभद्राय मातृकाम् ।
स्थूलां सूक्ष्मां शिवां घोरां सत्त्वाकारां सरस्वतीम् ॥ ५ ॥

---

[1] इदमनन्तरपद्यद्वय च नास्ति ग.

दिश्यात् [Folio. 2 a] सुखानि भवतां
कमलपलाशेन भूषिता सुरवरदा ।
लक्ष्मीरिवाद्रितनया
कमलपलाशेन भूषितासुरवरदा ॥ ६ ॥

स्म[2]रामि सर्वसाहि[3]त्यपारगाणां महात्मनाम् ।
गुरूणां यत्प्रसादेन प्राप्यते[4] वैबुधं पदम् ॥ ७ ॥

सारः सर्वस्य विद्वत्ता[5] विदुषां कवय.[6] पराः ।
कवीनां लिङ्गविज्ञानी न [सन्ति] [7]स नियो[प्य]तः ॥ ८ ॥

प्रार्थितः शास्त्रकारेण पादग्रहणपूर्वकम् ।
लिङ्गानुशासनव्याख्यां करोति पृथिवीश्वरः ॥ ९ ॥

इह शास्त्राणि [Folio. 2 b] विशि[8]ष्टेष्टदेवतानमस्कारपूर्वकाणि[9] समारभ्यन्त इति हि शिष्टाचारः । तदर्थमेव हि कविर्भगवन्तं[10] नारायणं सर्वभूतावासं वासुदेवं विष्णुं विश्वव्यापिन च कृष्णं नमस्कुर्वन् प्रथममेकं[11] श्लोकं चकार—

**नमो मथितदुर्वारदैत्यचक्राय चक्रिणे ।**
**सभूधरधरागारस्तम्भीभूतैकबाहवे ॥ १ ॥**

नम इति । भगवते चक्रिणे नमः । कीदृशाय ? मथितदुर्वार-दैत्यचक्राय । तथा सह भूधरै[Folio. 3 a]र्वर्त्तते यासौ भूमिस्तदेवागारं

---

2 'नमामि' ग.
3 'त्यसागराणा' ग.
4 'ते बुधसत्य' ग.
5 'द्वत्ता वि' क.
6 'वयो वराः' ग.
7 'न्ति सुधियो··· ' ग.
8 'शिष्टदे' ग.
9 'र्वाणि' ग.
10 'न्तं सर्वं' ग.
11 'मश्लोकमेकं' ग.

गृहम्, तत्र स्तम्भीभूत एको बाहुर्यस्य, सशैलवनकानना भूमि[12]रेक-बाहुस्तम्भाश्रिता भगवत इत्यर्थः ॥

एवं देवतानमस्कारक्रिया[13]मभिधाय प्रयोजनकथनायाह—

[14]मनोहरतमैर्वृत्तैः सज्जनानन्दवर्धनम् ।
लिङ्गानुशासनं स्पष्टं यथाबुद्धि विधीयते ॥ २ ॥

लिङ्गानुशासनं विधीयत इति । लिङ्गानां स्त्रीपुन्नपुंसका + + + [र्वेपदाविष्टपरिभाषा] द्वित्रि [Folio. 3 b] लिङ्गरूपाणामनुशासनं स्पष्टी-करणं क्रियते । अथ किमिदं लिङ्गं नाम? [15]येषामनुशासनं करिष्यते । ज्ञायते स्त्रीपुन्नपुंसकभावो यैस्तानि लिङ्गानि स्तनमेहनादीनि (चेदिमान्यपि स्त्र्यादीनि । सर्वे गत्यर्था ज्ञानार्था लिङ्गेन गत्यर्थस्य ज्ञानार्थत्वात् ?) । लिङ्गज्ञानस्य च प्रयोजनम्—सम्यक् शब्दप्रयोगावगमः; धर्मार्थकाममोक्ष-शास्त्राधिगमे तदर्थानुष्ठाने च चतुर्वर्गलाभः; महा [Folio. 4 a] कवित्वे च विद्वद्गोष्ठीषु नरेन्द्रसभासु च सत्कारगुणबहुमानलाभः; देवतास्तोत्रेणाचिरा-देवाभीष्टफलप्राप्तिः; एवं सर्वपुरुषार्थत्वमस्य [16]लिङ्गानुशासनस्य । ननु सन्ति व्याडि-वररुचि[17]-चन्द्रगोमिप्रभृतिमहापुरुषविरचितानि लिङ्गानुशा-सनानि; तत्किमस्य करणस्य प्रयोजनमित्याह—मनोहरतमैरित्यादि । मनोहरतमैः सर्वजन[18]हृदयहारिभिर्वृत्तैरिदं कृतम् । अत एव सज्जनानन्द-वर्द्धनम्, य[Folio. 4 b]था चान्येषु सत्सु एतत्सज्जनानन्दवर्द्धनम्, तथा पृथक्प्रकरणादिदर्शनेनात्रेऽस्य विशेषवत्त्वं व्यापिता च दर्शयिष्यते । यथाबुद्धि [19]बुद्ध्यानुरूप्येण । [20]तथाचोक्तं शास्त्रकारेण—

---

12 'रेवा' क.
13 'या[न्त्व]भि' क. 'र त्वभि' ग.
14 'नोरमत' ख. ग.
15 'येष्वनु' ग.
16 'ङ्गस्यानु' क.
17 'चिभद्रगोमितप्र' क.
18 'नमनोहा' ग.
19 'द्ध्यानुसारेण' ग.
20 'यथोक्तं' ग.

बह्वाचार्य[21]मतैर्व्यापि श्रव्यं लालित्ययोगतः ।
स्पष्टं स्पष्टीकृतै[22]रथैरिदं लिङ्गानुशासनम् ॥ ३ ॥

इति ।

स्त्रीलिङ्गप्रकरणम् ।

इदानीं स्त्रीप्रकरणमाकारान्तादिक्रमेण दर्शयन्नाह—

आदीदूतः स्त्रियां प्रायो गङ्गा लक्ष्मीश्चमूर्यथा ।
पर्या[Folio. 5 a]यसहिता भूमिर्व[23]ल्लिविद्युन्नदीदिशः ॥

आच्च ईच्च ऊच्च आदीदूतः । तेन आकारान्ता ईकारान्ता ऊकारान्ताश्च शब्दाः स्त्रियां भवन्ति । प्रायशो बाहुल्येन । यतोऽन्यत्रापि दृश्यन्ते ते यथावसरं वक्ष्यन्ते । दिङ्मात्रप्रदर्शनार्थं गङ्गादय उक्ताः । तेनाकारान्ता[24] यथा गङ्गा तथा खट्वामालादयो ज्ञातव्याः । ईकारान्ता द्विविधाः[25]—ङ्यन्ताः कृदन्ताश्च । तत्र ङ्यन्ता यथा—इयं गौरी[26] किशोरीत्येवमादयः । कृदन्ता यथा—इयं लक्ष्मीः,[27] इयं [Folio 5 b] श्रीः, इत्येवमादयः । ऊकारान्ता यथा—इयं चमूः इयं कण्डूः कुहूः जुहूः यवागूः कच्छूः तनूः अण्डूः अलाबूः कद्रूः दर्दूः इत्येवमादयः । एवमादिबहुत्वात् प्रातिपद्येन नोक्ताः । प्रायोग्रहणमतिव्याप्तिनिवृत्तये । तेन इय कीलालपा स्त्री, अयं कीलालपाः पुरुषः,[28] तथा इयं ग्रामणी स्त्री, अयं ग्रामणीः पुरुषः[29] । एवं यवलूप्रभृतयो ये आदीदूतः सन्ति [Folio. 6 a] ते [30]यथावसरमर्थवल्लिङ्गेषूदाहरिष्यन्ते । पर्यायसहिता [31]भूमीति । भूमिश्च वल्ली च विद्युच्च नदी

21 'मत व्योमिश्र' क.
22 'तैः स्पष्टैरि' क.
23 'वल्लीवि' क. 'मिर्वल्लीवि' ग.
24 'न्ताना य' क.
25 'धाः कृदन्ताः ङ्यन्ताश्च' ख.
26 'गौरी कुमारी हिशो' ख.
27 'क्ष्मीः श्रीः इत्येवमादयः । ङ्य' ख. 'श्रीः अमाङ्य' ग.
28 'पुमान्' ग.
29 'पुमान्' ग.
30 'ते चार्थे' ग.
[31] 'भूमिरिति' क. ग.

च दिक् च, ता एता भूमि-वल्ली-विद्यु-न्नदी-दिशः पर्यायसहिताः स्त्रियां भवन्ति । भूमिः—जगती पृथ्वी क्षोणीत्येवमादयः[32]; वल्ली—लता व्रतति-प्रभृतयः; विद्युत्—सौदामिनी तटित् चञ्चला चपलेत्येवमादयः; नदी-निम्नगा—पगादयः; दिशः—काष्ठाः हरितः ककु[Folio ( b]भः आशा इत्येवमादयः । अकारान्तानाम् "अजाद्यतष्टाप्" (पा०सू०. ४–१–४) इति टापा भवितव्यम् ॥

इदानीमिकारान्तान्[33] प्रदर्शयन्नाह—

सक्थ्यस्थिदधिसृक्व्यक्षि[34] विहाया[35]प्राणिवाचकम्[36] ।
उक्तानुक्तमिकारान्तं विद्याज्ज्ञात्या[37]दितोऽपरम् ॥५॥

इकारान्तं शब्दं स्त्रियां विद्यादित्येतावदुक्तावतिप्रसङ्गः[38] प्राप्नोतीत्यत आह—सक्थ्यस्थिदधिसृक्व्यक्षि विहायेति । सक्थि-अस्थि-दधि-[39]सृक्वि-अक्षि इत्य[Folio. 7 a]त्र समाहारैकवद्भावे नपुंसकत्वम् । एतदिकारान्तं शब्दपञ्चकं वर्जयित्वा, अप्राणिवाचकं असत्त्वाभिधायकम्, ज्ञात्यादितोऽपरम्—यतो ज्ञात्यतिथिप्रभृतयः पुंसि वक्ष्यन्ते तेभ्यो यदन्यदिकारान्तमुक्त-मनुक्तं वा शब्दरूपम्, स्त्रियां विद्यात् । ज्ञात्यादिमध्ये सक्थ्यादीना-मपाठात् तेषां निराकरणात्[40] स्त्रीपुन्नपुंसकता बोद्धव्या । यथा—इद[41]सक्थि ऊरुः [Folio 7 b] इदमस्थि कीकसम्, इदं दधि क्षीरविकारः, इदं सृक्वि [42]ओष्ठपर्यन्तः, इदमक्षि नेत्रम् । अप्राणिवाचकं ज्ञात्यादितोऽपरं

---

32 'यः पर्यायाः' ग.

33 'न्ताना द' ग.

34 'सृक्थ्यक्षि' क. ग.

35 'य प्रा' ग.

36 'कः' क.

37 'ज्ज्ञात्योदि' ग.

38 'त्येतावती वक्तुर्वेऽतिप्र' क. 'तावत्युक्ते वक्तव्येऽतिप्र' ग.

39 'सृक्थि' क. ग.

40 'त् त्रिषु नपुंसकत्वेन बो' ग.

41 'सृक्थि' क.

42 'ष्ठपर्यायः' ग.

इत्युक्तेऽन्यदुक्तानुक्तं शब्दरूपं सर्वं स्त्रियामापद्यते। तत् किमुक्तानुक्त-मुच्यते? सत्यम् ; किन्तु मन्दबुद्धिप्रबोधाय दिङ्मात्रं प्रदर्शयतोक्तम्[43] ॥

इदानीमिकारान्ताः प्रदर्श्यन्ते –

[44]ओषधिपद्धतिपक्षतिपङ्क्ती-
वर्त्तनिवाशिवितर्दिपुरन्ध्रीः।
अङ्गुलिका[Folio. 8 a]कलिशारिशरारी-[45]
स्तुन्दितुरीषुधिदीधितिवर्त्तीः[46] ॥ ६ ॥

एतान् शब्दान् स्त्रियां विद्यादित्यर्थः। [47]इयमोषधिः फलपाकान्ता। अन्ये त्वेवंविधाः [48]क्तिप्रत्ययान्ताः[49] सन्ध्यादयः। इयं [50]पद्धतिर्मार्गः। इयं पक्षतिः पक्षमूलम्। इयं [51]पङ्क्तिर्लेखा। वर्त्तनिः प्रवाहः। वाशिः तक्षणभाण्डम्। वितर्दिः[52] वेदि। पुरन्ध्रीः पुरन्ध्रिश्च वराङ्गना। अङ्गुलिः करशाखा। काकलिः स्वरविशेषः। यदुक्तम्—निषादः काकलीसंज्ञो[53] [Folio. 8 b]द्विश्रुत्युत्कर्षणाद्भवेत्" इति। शारिः पक्षिविशेषः पर्याणं वा। शरारिः[54] आतिर्किः। तुन्दिः नाभिः। [55]तुरिः वायकभाण्डम्। इषुधिः तूणः। अस्य क्तिप्रत्ययान्तत्वात् पुंस्त्वे[56] स्त्रियां वचनम्। दीधितिः रश्मिः। अन्ये रश्मिवाचकाः पुंसि कथिताः। यदुक्तम्—"दीधितिमेकां मुक्त्वा रश्म्यभिधानं पुंस्येव"। वर्त्तिः दीपाङ्गमिति ॥

---

43 'क्ताः' क. प्रदर्शयता ग्रन्थकारेणेति शेषः।

44 'धिपक्षतिपद्धतिप' ग.

45 'रातिस्तु' ग.

46 'तिपत्तीः' ग.

47 'ओषधी' इत्यपि रूपमस्ति।

48 'धाः प्र' ग.

49 'न्ताः पुंसि स' ग.

50 'पद्धती' इत्यपि रूपमस्ति.

51 'पत्तिर्ले' क.

52 'वितर्दी' इत्यप्यस्ति.

53 'सञ्ज्ञेति श्रु' ग.

54 'रातिः' क. 'राटिः' ग. शरातिः=शराटिः=पक्षिविशेषः.

55 'तुरी' इत्येव प्रसिद्धम्.

56 प्राप्ते इति शेषः।

भ्रुकुटिकुटिकटीतित्रोटिकोट्याजिराजि-[57]
च्छविकृषिरुचिवीचिश्रेणिनिःश्रेणिवेणीः ।
वटितुटिखनि[Folio 9 a]हानिग्लानिनेम्यश्रिनीवी-[58]
ग्रेहणिविपणिपेशीः पाळिधूळ्याळिनाळीः ॥ ७ ॥

एतान् स्त्रियां विद्यात् । इयं भ्रुकुटिः भ्रूभङ्गविशेषः, असौम्या दृष्टिः । कुटिः वासविशेषः । कटिः श्रोणि । ईतिरुपद्रवः । त्रोटिश्चञ्चुः । कोटिः[59] संख्या प्रान्तभूमिश्च अग्रभागश्च । आजिर्युद्धं भूमिभागश्च । राजिः रेखा । छविः कान्तिः । कृषिः कर्षणम् । रुचिर्दीप्तिः अभिलाषश्च इच्छा च । वीचिः कल्लोलः । श्रेणिः पङ्क्तिः [Folio 9 b] श्मशानशिल्पानां संहतिश्च । नि.श्रेणिरधिरोहणी । वेणिः शिरसि परा कचरचना । वटिः[60] मुद्गादिरचिता मण्डिकाकारा । तुटिः कालपरिमाण वाद्यविशेषश्च । खनिः आकरः । [61]हानिः अपचयः । ग्लानिः चित्तपीडा । नेमिश्चक्रावयवः । अश्रिः कोणः । नीविः [62]मूलधनं युवतिवदनं च वस्त्रभूषणं च । ग्रहणिः कोष्ठस्थानम्, रोगविशेषः । विपणिः वणिक्पथम्[63] । पेशिः मांसादिखण्डः । पाळिः सेतुः, [Folio 10 a] पङ्क्तिश्च कर्णैकदेशः प्रशंसोपलक्षणं च । धूळिः रजः । आळिः सखी पङ्क्तिश्च । नाळिः नाडिः कन्दली च [64]प्रणवविशेषश्च सिरा [असिरा] वायकभाण्डं च ॥

अरणि[65]करणिपार्ष्णि[66]च्छर्दिशुक्त्यातिशक्तीः
समितिवसतिहेती[67]र्गृष्टिविष्ट्यभ्रियष्टीः ।

---

57 'जिः छ' क.
58 'श्रिनेवी' श.
59 'कोटिः चञ्चुः स' श.
60 'वटिः दर्भादिविरचिता दण्डिका ?' श.
61 'हानिः' इति नास्ति क.
62 'नेविः जघनवस्त्रग्रथनम्' श. 'वस्त्रभूषण च' इति नास्ति श.
63 'थः' ग.
64 'प्राणिवि' ग.
65 'अरणितर' ग.
66 'पार्ष्णीच्छ' ग.
67 'तीर्गृष्टि' क. श.

रजनिधमनिनाभीरावलिश्रोणिभङ्गीः
खलिलिपिलिबिदर्वीः[68] शष्कुली[69]वेदिनान्दीः ॥

सर्वमेतत् स्त्रियां विद्यात् । इयमरणिः यज्ञाङ्गम् । करणिः आ [Folio 10 b] कृतिः । पार्ष्णिः पादपश्चिमभागः । छर्दिः वमनम् । शुक्तिः शिम्बुका । आतिः शरारिः । शक्तिरायुधविशेषः सामर्थ्यं च । समितिः सङ्केतस्थानं सभा च । वसतिः निवासः । हेतिः ज्वाला प्रहरणं च । [70]गृष्टिः सकृत्प्रसूता गौः मानविशेषश्च । विष्टिः विष्टीकरणम् । [71]अभ्रिः खनित्रम् । यष्टिः दण्ड । रजनिः निशा । धमनिः मुखैकदेशः सिरा च । नाभिः तुन्दिः मध्यं च । आवलिः[72] पङ्क्तिः । श्रोणिः कटिः । भङ्गिः [Folio 11 a] विच्छित्तिः । खलिः पिण्याकः । लिपिरक्षरविन्यासः । [73]लिबिरक्षरविन्यास एव । दर्विः [74]पाकोपकरणं स्रुग्दारुभाण्डम् । शष्कुलिः कर्णदेशः अपूपविशेषश्च । वेदिः वितर्दिः[75] । नान्दिः पूर्वरङ्गः ॥

अथ परिभाषालिङ्गान्युच्यन्ते—

अबुधे कृष्टिमश्वाङ्गे[76] दुन्दुभिं सुरभिं गवि ।
गजादानावनौ वारिं दन्त्यो[77]ष्ठ्यादिं बलिं तथा ॥ ९ ॥

कृष्टिशब्दो बुधे पण्डिते वर्त्तमानः पुंसि, अबुधे कर्षणे तु [Folio 11 b] कृष्टिः स्त्रियाम् । दुन्दुभिशब्द[78]श्चाश्वैकदेशे वर्त्तमानः स्त्रियाम्, भेर्यां तु पुंस्येव । सुरभिशब्दश्च गवि वर्त्तमानः स्त्रियाम् । इयं सुरभिर्गन्धः, सुरभीदं

---

68 'लिविद' क. ग. श.

69 'लिर्वे' क.

70 'घृष्टिः' श.

71 'अभ्री' इत्यप्यस्ति ।

72 'लिः ग्रन्थः । श्रो' श.

73 'लि (वि ? वि)' क.

74 'दर्विखडाः' श. (?)

75 'विदर्दिः' ग.

76 'ष्टिरश्वाङ्गे' क 'ष्टिमश्वाङ्गेः' श. ख.

77 'दन्त्यौष्ठादिवलि' श.

78 'ब्दक्षाश्वैक' ग.

पुष्पमिति । वारिशब्दो गजग्रहणस्थाने वर्त्तमानः स्त्रियाम् । इयं वारिर्मेज-ग्रहणस्थानम् । अन्यत्रेदं वारि जलमिति । तथा दन्त्योष्ठ्यादिर्वलिशब्दः स्त्रियाम् । इयं वलिस्त्वक्सङ्कोचः । अन्यत्रायं बलिरुप[Folio 12 a]हारः असुरो वा । इतीकारान्तं शब्दरूपं यदुक्तमनुक्तं च स्त्रियां विद्यात् । तद्यथा— इयं चर्षणिः, भृतिः, कृत्तिः, सातिः, वसतिः, प्रीतिः, ज्यानिः, वामिः, भूमिः, नियतिः, सूतिः, जामिः, शल्मलिः, किखिः,[79] श्रीः, इत्येवमादयः । यदनुक्तं तल्लक्ष्यतोऽवधार्यम् ॥

इतीदन्ताः[80] ।

---

इदानीमुकारान्ता उच्यन्ते—

स्नायुप्रियङ्गू दनुकाकुकङ्कू[81]
रज्ज्वाखुपर्शूस्तनुकच्छुचञ्चूः ।

[82]एते स्नाय्वादयः[Folio 12 b] स्त्रियां स्युः । तद्यथा—इयं स्नायुः सिरा । प्रियङ्गुः श्यामा धान्यविशेषश्च । दनुः दानवमाता । काकुः भिन्नकण्ठो ध्वनिः । कङ्कुः प्रियङ्गुः[83] क्रमुकं च । रज्जुः [84]मुञ्जादिकृतं दाम । आखुः मूषिकः । पर्शुः प्राण्यङ्गम् । तनुः शरीरम् । कच्छुः पामा । चञ्चुस्त्रोटिः ॥

इत्युदन्ताः ।

---

79 'किकिः' इत्यपि पक्षि(चटका)-नामास्ति ।

80 'इदन्ताः समाप्ताः' ग.

81 'कङ्कुर' ग.

82 'एते स्त्रिया भवन्ति' ग.

83 'ङ्गुः श्यामा लता क्र' श.

84 'ज्जुः मञ्ञा' श.

मात्रादयोऽत्र प्रथिता[85] ऋदन्ता
रा द्यौः[86] सनौः स्यादपरस्वरेषु ॥ १० ॥

एते शब्दाः [Folio 13 a] स्त्रियां भवन्तीति सम्बन्धः । मात्रादयो यथा—इयं स्त्री माता स्वसा दुहिता ननान्दा इत्यादयः । पिता भ्राता नप्तेत्यादयः पुंसि प्रथिताः । एवं ऋकारान्ता उक्ता अपरस्वरेषु ऋदादिषु । रा द्यौ सनौः नौशब्देन सह स्त्रियां भवति । यथा—इयं राः[87] धनम्; इयं द्यौः स्वर्गः ; इयं नौः प्लव । इत्येतावन्त एवापरस्वरेषु स्त्रियां भवन्ति । गोशब्दस्य उभय[88]लिङ्गता वक्ष्यते ॥

इत्यज[Folio 13 b]न्ता.[89] ।

---

अथ हलन्ता उच्यन्ते—

स्रक्सीमपामदृषदः समिदापदापः
प्रावृट्च्छरद्दरदुपानहृचो द्युभासौ ।
त्विड्विप्रुषावुपनिषत्परिषत्क्षुदाशीः[90]
सम्पद्विपत्प्रातिपदो विडमानवे तु ॥ ११ ॥

एते स्रगादयः स्त्रियां भवन्ति । यथा—इयं स्रक् माला । सीमा मर्यादा । पामा[91] व्याधिः । दृषत् शिला । [92]समित् अग्नीन्धना[93] काष्ठा युद्धं च । आपद् व्यसनम् । आपः जलानि । प्रावृट् वर्षाः । शरत्

85 'ता रुद' क.

86 'द्यौसनौ' ख.

87 दानार्थकोऽय प्रसिद्धः । यथा— "स रातु वो दुश्च्यवनः" का० प्र०. उ.७. इत्यादौ ।

88 'यस्त्रीलि' क.

89 'न्ताः परिसमाप्ताः' ग.

90 'दाशि: स' क.

91 'मा कष्टविशेषः ।' ग.

92 'समित्' इति नास्ति क.

93 'न्धनकाष्ठ.' ग.

ऋतुविशेषः। दरत् म्लेच्छजा[Folio. 14 a]तिविशेषः। उपानत् चर्मपादुके। ऋक् पादबद्धो वेदैकदेशः। द्यौः वियत्। भा: दीप्तिः। विप्रुट् सूक्ष्मजलकणः। उपनिषत् रहस्यशास्त्रम्। परिषत् सभा। क्षुत् बुभुक्षा। आशीः आशा[94]। सम्पत् सम्पत्तिः। विपत् विपत्तिः। प्रतिपत् पक्षस्याद्यतिथिः। विडमानवे तु। एतदुक्तं भवति—विट्शब्द अमानवे मनुष्यवर्जिते विष्ठायां वर्त्तमानः स्त्रियाम्, मानवे तु पुंसि पुलिङ्ग एव। यथा—अयं विट् वै-[Folio. 14 b]श्यः॥

स्रुक्त्वङ्निर्णिङ्नि[95]शावेहद्वीरुत् संसच्च मुन्मृदौ।
द्वाः पूर्योषित्तृ[96]षत्स्फिग्धूर्वाग्गी[97]रुड्दृक्परिस्रुतः॥

एतेऽपि स्त्रियामेव। यथा—इयं स्रुक् होमभाण्डम्। त्वक् चर्म। निर्णिङ्[98] बुद्धिः। निशा वे[हत् गौः]। वीरुत् तृणविशेषः। संसत् सभा। मुत् हर्षः। मृत् मृत्तिका। द्वाः द्वारम्। पूः पुरी। योषित् स्त्री। [99]तृट् तृषा। स्फिग् ऊरुसन्धिः वराङ्गं च। धूः उच्चैःस्था[Folio. 15 a]नम्। वाग्वाणी। गीर्वाक्। रुट् रोषः। दृक् दृष्टिः। परिस्रुत् सुरा॥

विंशत्याद्या नवत्यन्ता अन्यन्तोऽभवनिर्यथा।
तल्प्रत्ययो यथा गीता छन्दस्यूर्ध्वं च मध्यमात्॥

विंशतिप्रभृतयः[100]—विंशतिः, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टिः, सप्ततिः, अशीतिः, नवतिः। [101]आदिग्रहणात्[102] त्रिंशदादयो गृह्यन्ते

---

94 'आशास्या।' ग.

95 'निशोवि' क.

96 'षिन्तृष' श.

97 'र्वाग्भीरुड्ढ्कृ' ग.

98 'निर्णिज् शुद्धिः' श.

99 तृट् इति मूले नास्ति, तृषत् इति वर्त्तते। 'तृषत् विषादः' श.

100 स्त्रिया भवन्तीति शेषः।

101 'विंशत्याद्याः आदि' श.

102 'त् एकविंशतिप्रभृतयो गृ' श.

यावंच्छतम् । शतात्प्रभृति नपुंसकम् । इदानीं प्रत्ययद्वारेण दर्शयन्नाह[103]—[Folio. 15 b] अन्यन्तः "आक्रोशे नञ्यनिः" (पा० सू०. ३–३–११२) इत्यनिप्रत्ययान्तश्च स्त्रियां भवति । अभवनिः, प्रायणिः इत्येवमादयः । तल्प्रत्ययो भावार्थे "तस्य भावस्त्वतलौ" (पा०सू०. ५–१–११९) इति । यथा—इयं पटुता, मृदुता, गोता इत्यादयः । समूहार्थे "ग्रामजनबन्धुसहायेभ्यस्तल्" [104](पा०सू०. ४–२–४३) । यथा—इयं ग्रामता, जनता, बन्धुता, सहायता । "स्वार्थिको देवात्तल्" (पा०सू०. ५–४–२७) । देव एव देवता । छन्दसि च—गायत्र्यादीनां छन्दस्त्वान्नपुंसकता प्राप्ता बाध्यते । गायत्रीबृह [Folio. 16 a] ती-शक्करीणामीकारान्तत्वादेव स्त्रीलिङ्गता प्रसिद्धा । ऊर्ध्वानामष्ट्यादीनां तथा [105]मध्यानामुष्णिगनुष्टुप्प्रभृतीनां वचनाद्विधीयते । गायत्री उष्णिगनुष्टुप् बृहती पङ्क्तिः त्रिष्टुप् जगती अतिजगती शक्करी अतिशक्करी अष्टिः अत्यष्टिः धृतिः अतिधृतिः कृतिः प्रकृतिराकृतिः विकृतिः उत्कृतिः एताः छन्दोजातयः ॥

इति [106]भट्टभरद्वाजसूनोः [107]पृथिवीश्वरस्य कृतौ हर्षवर्धन[108]कृत-लिङ्गानुशा[Folio. 16 b]सनटीकायां[109] स्त्रीप्रकरणम्[110] ॥

---

103 'ह—तल्प्रत्यय इति 'तस्य०'—देवता । अन्यन्तः—प्रायणिरित्येवमादयः । छन्द' क. 'अभवनिः एव अजननिः, अकरणिः इत्यादयः' श. 'र्शयितुमाह' ग.

104 " ग्रामजनबन्धुभ्यस्तल् " इत्येव सूत्रम् । सहायता इति तु "गजसहायाभ्या चेति वक्तव्यम्" इति वार्त्तिकेण सिध्यति ।

105 'मध्यदुष्णि' क. 'मध्यमं इति त्र्यक्षरं छन्द उच्यते । अत ऊर्ध्वं प्रतिष्ठागायत्रीप्रभृतय उत्कृतिप्रभृतयः सर्वाश्छन्दोजातयः स्त्रिया भवन्तीत्यर्थः' श.

106 'ट्टदीतस्वामिसू' श. 'ट्टभारद्वाजस्य सूनोः' ग.

107 'नोः बलवागीश्वरस्य शबरस्वामिनः कृ' श.

108 'नलि' ग.

109 'काया सर्वलक्षणाया स्त्री' ग.

110 'स्त्रीलिङ्गप्र' क. श. ग.

अथ पुल्लिङ्गप्रकरणम् ।

बहुस्वरः पुंसि भवेदसन्त-
स्त्वन्योऽसमस्तः[1] सुमनोऽप्सरस्तः[2] ।
द्व्यच्कं तु [3]वेधोजरसौ विहाय
विहायसा साकमसन्तमन्ये[4] ॥ १४ ॥

स्वरा अचः बहवो यस्यासन्तस्य[5] स बहुस्वरोऽसन्तः पुंसि भवति । एवं सति सुमनोऽप्सरश्शब्दयोः पुंस्त्वं प्राप्नोती[6]त्याह—अन्यः सुमनोऽप्सरश्शब्दाभ्याम् । सुमनोऽप्सरश्शब्दौ[Folio. 17 a]बह्वच्कावपि [7]असन्तावपि स्त्रियां भवतः । असमस्तोऽकृतसमासः । समस्तयोरभिधेयवल्लिङ्गता वक्ष्यते । शोभनानि मनांसि येषां ते सुमनसः पण्डिता. । सहाप्सरोभिर्वर्त्तन्त इति साप्सरसः सिद्धचारणा इति । सुमनोऽप्सरोभ्यामन्ये बहुस्वरा असन्ताः पुंसि । यथा—सुयशाः, सुवर्चाः, उशनाः, बिडौजाः, अनेहाः इत्येवमादयः । बिडौजाः, अनेहाः, उशनाः [8]शक्र-शुक्र-कालवाचकाः । ए[Folio. 17 b]-वमन्येऽपि । अप्सर[9]स्सुमनश्शब्दयोः पुंस्त्वे प्राप्ते प्रतिषेधः । नपुंसके बहुस्वरत्वादप्राप्तिः । पारिशेष्यात् स्त्रियाम् । इमा अप्सरसः [10]देववनिताः, इमाः सुमनसः पुष्पाणि । यस्तु [11]जरसोऽन्य इति तुशब्दो विशेषद्योतनाय ।

---

1 'मस्तात्सु' क.
2 'रन्तः' ग.
3 'वेधौ ज' ग.
4 'मन्त्ये' ख.
5 'स्यासौ ब' ख.
6 'तीत्यत आ' ख.
7 'पि स' क. 'ब्दौ असन्तौ बह्वच्कावपि स्त्रि' ख.
8 'शक्रकालशुक्रवा' ग.
9 'रसस्सुम' ग.
10 'देवताः' ख.
11 'रस्तोऽन्य' ग.

यः [12]द्व्यच् द्विस्वरः जरसोऽन्यः वेधाः । वेधसो द्व्यच्कत्वात् नपुंसकता प्राप्ता, अत आह—वेधःशब्दं[13] विहाय[14] संमुक्त्वा द्व्यच्कमन्त्ये[15] न[Folio 18 a]पुंसके स्यात्[16] । विहायसा साकं सार्द्धं असन्तं नपुंसके स्यात्[17] । विहायश्शब्दस्य बह्वच्कत्वात् पुंस्त्वे प्राप्ते प्रतिषेधः । द्विस्वरो नपुंसके । तद्यथा—इदं तेज , यशः, चेत', रेतः, ओजः, शिरः, सरः, ऊधः, वक्ष', रक्ष', तपः, पयः । [18]एवमन्येऽपि [विहायः संरीप्सितलिङ्गत्व] ईयसन्तोऽर्थवत्[19] । श्रेयान् पुमान्, श्रेयसी स्त्री, श्रेयः कुलम्[20] इति । वेधो-जरसोरिह प्रतिषेधः । वेधसो धातृवाचकत्वात् पुं[Folio 18 b]स्त्वम्—अयं वेधाः धाता । जराशब्दस्य जरसा स्त्रीत्वम्—इमां जरसं पश्य इति । पुंसीत्यधिकारात् पुलिङ्गमिति यावत्, प्रासङ्गिकत्वादन्तिमलिङ्गस्य[21] ॥

इदानीं यथाक्रममकारान्तान् दर्शयितुमाह—

शाटककीटवराटकवण्टा
निष्कुटवाटकवाटकिटाट्टाः ।
जूटकटाहकटावटपट्टाः
कण्टककङ्कटकोष्ठकुटाङ्काः ॥ १५ ॥

एते[22]शाटकादयः पुंसीत्यधिकृतमा प्रकरणसमाप्तेः । अ[Folio 19 a]यं शाटकः पटः । कीटः कृमिः । वराटक.[23] कपर्दक. । वण्टः भागः ।

---

12 'यः पुद्व्यच्' ख. 'यः पुयः द्व्च्कः द्वि' क.
13 'ब्दः वि' क.
14 'य मु' ख.
15 'मन्तिमलि ` न' ख.
16 'स्यात् भवेत्' ख.
17 विद्यादित्यर्थः ।
18 'एवमादयोऽन्येपि' ख.
19 अभिधेयलिङ्गवदित्यर्थः ।
20 'कुच इ' ग.
21 नपुंसकस्येत्यर्थः ।
22 'शाकटाद' ख.
23 'टः क' क.

निष्कुटः गृहारामः[24]। वाटः[25] प्रदेशः वरण्टः यवविकारः। कवाटः अटीत्तिः[26]। किटः काण्डपटः। अट्टः क्षौममन्नं च । जूटः[27] कचरचना समूहश्च। कटाहः पाकभाण्डम्। कटः करिकपोलः भाण्डपटश्च। अवटः अन्तरम्। पट्टः कौशेयम्। कण्टकः[28] बदर्याद्य [ङ्गहः]। कङ्कटः[29] सन्नाहः। कोष्ठः[30] जठरान्तः अन्तर्गृहं च। कुटः घट हलाग्रं च। अ[Folio. 19 b]ङ्कः चिह्नमुत्सङ्गं च ॥

मण्डपमण्डवरण्डकगण्डा
दण्डकदण्डगुडानकषण्डाः ।
खण्डशिखण्डकपर्दकपिण्डा[31]
वर्गसमुद्रमृदङ्गतरङ्गाः ॥ १६ ॥

एते पुंसि। अयं मण्डपः [32]आवासविशेषः। मण्डः [33]सर्वस्याग्रम्, पक्वान्नरसविशेषश्च। वरण्डकः[34] परिवारः। गण्डः कपोलः। दण्डकः वृत्तविशेषः [Folio. 20 a]। दण्डः लकुटः [35]दुष्टदमनं च। गुडः इक्षुविकारः गुळकश्च। आनकः पटहः। षण्डः वृक्षादिसङ्घः। खण्डः शकलं इक्षुविकारश्च। शिखण्डः कलापः। कपर्दकः वराटकः। पिण्डः देहः मृदादिवर्त्तितो[36] देशश्च। वर्गः यवादिसङ्घः। समुद्गः करण्डविशेषः। मृदङ्गः मुरजः। तरङ्गः कल्लोलः ॥

---

24 'गृहाङ्गणम्' क. ख. ग.
25 'वाटकः प्र' क.
26 'आतितिः' ख.
27 'टः नटासंहतिः स' श.
28 'कः उदर्याद्यङ्गरुह' श.
29 'ङ्कहः स' क.
30 'ष्ठः उदरा' श.
31 'पिण्डव' श.
32 'अधिवास' ख.
33 'र्वरसाग्रं' श.
34 —भित्तिः—हे०
35 'ष्टमन्न' क.
36 'तोऽद्रयादिः' श.

गर्त्तमुहूर्त्तवतंसककोशाः
कर्णपणौ कणकङ्कणकोणाः ।
[37]वङ्क्षण[Folio. 20 b]दर्पणबाणकिणांशाः[38]
[39]शाणगणौदनशोणयवाद्याः ॥ १७ ॥

एते शब्दाः पुंसि । अयं गर्त्तः श्वभ्रः । मुहूर्त्तः क्षणम् । वतंसकः अवतंसकोऽपि, कर्णपूरः शेखरश्च । अत्र,

"वष्टि [40]भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
[41]हलन्तादपि टापं वा यथा वाचा दिशा क्षुधा" ॥

इति [42]पक्ष [43]अकारलोपः । कोशः धननिचयः निधानं दिव्यविशेषश्च । क[Folio 21 a]र्णः अरित्रं श्रवणं च । पणः [श्लाहाप ? ग्रहः] परिमाणार्थश्च । कणः लेशः । कङ्कणः मङ्गलसूत्रं आभरणविशेषः । कोणः[44] अश्रिः वादनदण्डश्च । [45]वङ्क्षणः [46]ऊरुसन्धिः । दर्पणः आदर्शः । बाणः शरः । किणः निघर्षजः पिटकः । अंशः भागः । शाणः [47]शस्त्रमार्जनपाषाणः । [48]गणः पूगः । ओदनः भक्तः । शोणः[49] नदः । यवाद्याः—इमे यवाः, व्रीहिविशेषः । आदिग्रहणात् गोधूमाः, माषाः, मसूराः, तिलाः, मुद्गाः, [Folio. 21 b] श्यामाकाः, नीवाराः, इत्येवमादयः ॥

37 'लक्षण' क. ग.
38 'णाशाः' ख.
39 'णकणोदन' ख.
40 'ष्टि वागुरि' ख.
41 'आपं चैव हलन्ताना यथा०' इत्यपि पाठः ।
42 'ति वागुरिपक्षे' ख.
43 'अल्लोपः' क.
44 'णः असिः वादित्रवादन च' ख.
45 'लक्ष' क. ग.
46 'णः जघनस' श.
47 'स्त्रपरिमार्जनः पा' श.
48 'कर्षश्चतुर्थांशलक्षणो नामविशेषः गणः' ख.
49 –णः नदोपलक्षणम्—हे०

सार्थवरूथनिशीथरथार्थ-
  प्रोथलवाः शपथा[50]वसथान्ताः ।
सङ्घनिदाघघुणा[51]र्घनिघौघा
  विघ्नघटाङ्कुशगुल्मगुणोद्घाः ॥ १८ ॥

एते शब्दाः पुंसि । अयं सार्थः पथिकसङ्घातः गणश्च । वरूथः रथगुप्तिः । निशीथः सुप्तजनता मध्यमरात्रिश्च । रथः[52] स्यन्दनः । अर्थः काव्यशरीरम्, वार्त्ता[Folio. 22 a]निमित्तं च धनम्, प्रयोजनम्, निवृत्तिश्च, अभिधेयं च । प्रोथः अश्वस्य घोणा, मध्यम्, वराहमुखं च । लवः लेशः । शपथः समयः । [53]आवसथः गृहम् । अन्तः अवसानम्, मध्यं च । सङ्घः समूहः । निदाघः उष्णकालः । घुणः कृमिजातिविशेषः । [54]अर्घः पण्यमूल्यम्, पूजाजलं च । [55]निघः निमित्तम् । ओघः जलपूरः, समूहश्च । [56]विघ्नः अन्तरायः । घटः कुम्भः । अङ्कुशः सृणिः गजतोत्रम् । गुल्मः रोगवि[Folio. 22 b]शेषः जनसङ्घश्च । गुणः बहुप्रकारः—शीतोष्णादिद्रव्याश्रयः आयुर्वेदे तत्र तत्र प्रसिद्धः, सत्त्वादिः, शुक्लादिः, क्षान्त्यादिः, श्रुतादिश्च[57] । उद्घः प्रशंसावचनम् ॥

[58]झर्झरनूपुरबुद्बुदवप्राः
  [59]कूबरमुद्गरदर्दुरहाराः ।

---

50 'थाचलथा' ग.
51 'णाघनि' क.
52 'रथः स्यन्दन काव्यशरीर वार्त्तानिमित्तं च । अर्थः धनम्' ख.
53 'अव' क. श.
54 'अघः' क.
55 पा०सू०.३-३-८७. श.
56 'निघ्नः' ग.
57 'दिश्वद्या च' क.
58 'जर्झ' श.
59 'कूवर' श.

तोमरशेखरशीकरसीरा
मेढ्रतुषारखुराङ्कुरचुक्राः[60] ॥ १९ ॥

एते पुंसि । अयं झर्झरः [61]वाद्यविशेषः । नूपुरः तुलाकोटिकम्, [काकोटिः ?] भूषणविशेषश्च । बुद्बुदः जलविकारः । वप्रः क्षेत्रम्, प्राकारा[Folio 23 a]ग्रचयश्च । [62]कूबरः युगः[63] रथप्रदेशश्च । मुद्गरः अयोघनः । दर्दुरः वाद्यविशेषः । हारः कण्ठाभरणविशेषः । तोमरः शरविशेषः । शेखरः किरीटम् । शीकरः वातास्तं [64]वारि । सीरः हलम् । अस्यान्ये पर्याया नपुंसके वक्ष्यन्ते । मेढ्रः लिङ्गम् । तुषारः प्रालेयम् । खुरः गवादिपदः । अङ्कुरः [65]बीजप्रादुर्भावः । चुक्रः शुक्तम् । क्वाथपूर्वको हव्यसंस्कृतो योगविशेषः आयुर्वेदसिद्धः । शुक्रमित्यन्ये ॥

कक्षगवाक्षकटाक्षकषायाः
पक्षखटक्षुपविद्रुमश[Folio. 23 b]ष्पाः ।
फेनजन[66]क्षुरबाष्पतुषोषा
[67]भेषनिमेषकरीषनिपाताः ॥ २० ॥

एते पुंसि । अयं कक्षः तृणम्, काननमित्यन्ये । गवाक्षः वातायनम् । कटाक्षः अपाङ्गदृष्टिः स्त्रियाः[68] । कषायः रसविशेषः । पक्षः मासार्धः खगाङ्गरुहश्च सहायश्च । खटः तृणम् । क्षुपः ह्रस्वशिरा[69] विटपी । विद्रुमः

60 'शुक्राः' श.
61 'वाक्यवि' क.
62 'कूवर' श.
63 'युगन्धरप्र' श.
64 'स्तवा' ख.
65 'ज प्रा' क.
66 'रवाष्प' श.
67 'भ्रेष' श.
68 'याम्' ग.
69 'शिरो वि' क.

प्रवालः । शष्पः[70] बालतृणम् । फेनः जलमलम् । जनः लोक । क्षुरः नापितभाण्डम् । बाष्पः ऊष्मा अश्रु च । तुषः धा[Folio 24 a]न्यकणः । ऊष ऊषरः । भेषः[71] अन्तः रुक् नाशश्च । निमेषः कालपरिमाणम् । करीषः गोमयनिचयः । निपातः अव्ययम् ॥

स्यन्दनमस्तकपुस्तकपुस्ता
धर्मरयोपलघर्मबुसा[72]र्माः ।
तण्डुलतूलकुसूलचषालाः
कम्बलसालकलापकपोलाः ॥ २१ ॥

एते पुंसि । अयं स्यन्दनः रथः । मस्तकः शिरः । पुस्तकः ग्रन्थाधारः । पुस्त(कः) लेख्य [लेप्य]ञ्च । धर्मः पुण्यम् । रयः वेगः । उपलः पाषाणः । घर्मः ऊ[Folio. 24 b]ष्मा निदाघश्च । बुसः यवादिनाळचूर्णः । अर्मः नेत्ररोगविशेषः । इदं नपुंसकमित्यन्ये । तण्डुलः धान्यसारः । तूलः कार्पासः शल्मलिश्च । कुसूलः मृद्भाण्डम् । चषालः यज्ञयूप[73]कटकम् । कम्बलः अविमयप्रावरणम् , वल्कः, [74]सास्ना च । सालः प्राकारः वृक्षविशेषश्च । कलापः समूहः शिखण्डश्च । कपोलः गण्डः ॥

[75]रेफकफज्वरसंयुगसङ्घाः[76]
स्तम्बनितम्बमदच्छदपुङ्खाः ।
वस्त्रदशा विटपः पटहार्भ[77]-
व्रातपटा पि[Folio 25 a]टकः करटश्च ॥ २२ ॥

---

70 'शष्प बालतृणं घासः' इत्यमरः ।
71 'भ्रेष: आतङ्कः' श.
72 'सान्दाः' श.
73 'पका' श.
74 'सस्ना' क.
75 'रेथक' क. 'रेपक' ख.
76 'संख्याः' श. 'सङ्घाः' ख.
77 'हर्दी' ग. 'हर्मा त्रा' क.

एते पुंसि । अयं रेफः रथः [78]अनवद्यं च । कफः श्लेष्मा । ज्वरः रोगः । संयुगः रणम् । [79]सङ्घः रणमेव । स्तम्बः वृक्षादिकाण्डः, आळानं च । नितम्बः कटिपश्चाद्भागः । मदः धन-विद्या-स्वजनादिकृतो दर्पः, रोगविशेषश्च । छदः छादनम् । पुङ्खः शरवृन्तः । वस्त्रदशाः [80]वस्तयः । अस्य नित्यबहुत्वमग्रे वक्ष्यति । चन्द्रस्यायं त्रिलिङ्गेऽपि । अन्यो दशाशब्दः स्त्रियाम्—इयं दशा [Folio. 25 b] आयुषो भागः । अस्याकारान्तत्वात् स्त्रीत्वम् । विटपः लता गुल्मः । [81]पटहः आनकः । अर्भः शिशुः । व्रातः सङ्घः । पटः प्रावरणम् । पिटकः स्फोटः भाण्डविशेषश्च । करट. करिकपोलः काकश्च ॥

पिण्याककूपव्रजयूप[82]सूप-
प्राग्वंशवंश[83]ह्रदशोकशूकाः ।
सीमन्तकुन्तध्वजकुन्दकूर्च-[84]
[85]लौहित्यकल्पा जवदर्भगर्भाः ॥ २३ ॥

एते पुंसि । अयं पिण्याकः खलिः । कू[Folio 26 a]पः निपानम् । व्रजः गणः गोकुलं च । यूपः यज्ञाङ्गम्, हलोपकरणं च । [86]सूपः मुद्गादि-व्यञ्जनम् । प्राग्वंश. प्रा(श्य)विग्रहः । वंशः कुलं वेणुश्च । ह्रदः जलाशयः । शोकः विषादः । शूकः किशारुः । सीमन्तः शिरसि[87] परा कचरचना । कुन्तः प्रासः । ध्वजः चिह्नम् । कुन्दः पुष्पविशेषः । [88]कूर्चः

78 'अव' श.
79 'सङ्घः समूहः' ख.
80 'वस्त्रयः' ख.
81 'ल्मः । आनकः पटहः' क.
82 'पपूप' श.
83 'शा ह्र' ग.
84 'कूर्प' क.
85 'लोहि' ग. श.
86 'पूपः' श.
87 'सि पुरः केशर' श.
88 'कूर्पः' क.

श्मश्रु, कुविन्दभाण्डं च । [89]लौहित्यं तटविशेषः । कल्पः विधिः, ब्रह्मणो[90] होरात्र[Folio. 26 b]यं च । जवः वेगः । दर्भः बर्हिः । गर्भः भ्रूणः ॥

पाषाणपूगावितरोऽक्षशब्दः
स्वार्थादपूपः कुणपः सपूयः ।
स्कन्धः पुरोडाश उपघ्नशूर्प-
मञ्चाळका बल्बजलाजभावाः[91] ॥ २४ ॥

एते पुंसि । अयं पाषाणः अश्मा । पूगः गणः । स्वार्थादिन्द्रियार्थादितरः अन्यः अक्षशब्दः पुंसि । यथा—अयं यानाक्षः शकटाक्षः । अक्षाः प्रासकाः । स्वार्थादिति किम्? इमान्यक्षाणीन्द्रियाणि । अपूपः पिष्टकृतः[92] [Folio. 27 a] । कुणपः शवः सपूयः सह पूयशब्देन । स्कन्धः अंसः प्रकाण्डं च । पुरोडाशः अग्निहोत्रे पिष्टपिण्डः । उपघ्नः आश्रयः । शूर्पः[93] मानम्, [94]प्रस्फोटनम्, धूपनभाण्डं च । मञ्चः खट्वा, राजासनं च । अळकाः स्त्रीललाटसङ्गिनः केशाः । बल्बजास्तृणजातयः । लाजा भ्रष्टा व्रीहयः । [95]भावः भागः स्तम्बकः स्त्रीशृङ्गारचेष्टा च [Folio. 27 b] ॥

नाडीव्रणो जनपदाभिजनावपाङ्ग-
निर्यूह[96]यानयुगमोदकत[97]र्ककल्काः ।
केदारवेगदिवसाश्रमसप्रवाळौ[98]
वल्मीकताळकललास्तरलः सकीलः ॥ २५ ॥

---

89 'लोहि' ग. श.
90 'णोऽहोरात्रं च' ग.
91 'जहावाः' श.
92 'तः मण्डः' श.
93 'र्पः शूर्पकं मा' श.
94 'प्रेतनस्फेटन' क.
95 'हावः रत्यङ्गचेष्टितं भावसूचकं च' श.
96 'र्यूपया' ग.
97 'दककर्क' क. 'दककल्कतर्काः' ग. श.
98 'वाळव' ग. क. श.

एते पुंसि । नाडीपूर्वो व्रणशब्दः पुंसि । यथा—नाडीव्रणः सरोगाङ्गे सुषिरम् । केवलस्तूभयलिङ्गे[99] वक्ष्यते । जनपदः देश । अत्र जनपूर्वः पदशब्दः पुंसि । केवलस्तु नपुंसके । यथा—पदम् इति । अभिजनः कुलं [Folio 28 a] [100]जन्मभूश्च । जनशब्दस्य यद्यपि पुंस्त्वं तथापि अभिपूर्वस्यासन्देहार्थं वचनम् । अपाङ्गस्तिलकः नेत्रान्तश्च । अत्रापि अपपूर्वोऽङ्गशब्द, केवलाङ्गशब्दस्तु नपुंसके । यथा—अङ्गम् इति । निर्यूहः[101] द्वारमापीडम्, [102]गृहदारु, घनश्च द्रव्यनिर्यासः । यानयुगः पुंसि, यानपूर्वः युगशब्दः पुंसि । केवलस्तु नपुंसके अन्यपूर्वश्च । यथा—युगम् युग्मम्, कृतयुगम्, च[Folio. 28 b]तुर्युगमित्यादि । मोदकः तिलगुडादिसंयोगः । तर्कः ऊहः । कल्कः पापम्, द्रव्यक्षोदश्च । केदारः तीर्थविशेष, क्षेत्रं च । वेगः रयः । दिवसः दिनम् । चमस द्रव्यभाण्डम् । प्रवाळः विद्रुमः, रत्नविशेषश्च । वल्मीकः (पा ? वा)मलूरः । तालः तरुविशेषः । दक्षिणापथे प्रसिद्धः, प्रमाणम्, गीतवाद्यविशेषश्च । कलल [103]शुक्रशोणितमिश्रः[104]। तरलः हारमध्यमणिः । सकीलः सह कीलेन वर्त्तत इति[105] । कीलः शङ्कुः ॥

श्रृङ्गाराङ्गारकायाः[Folio 29 a]कुतपक[106]णरयोद्गीथ-
भृङ्गारकुम्भाः संग्रामग्रामयामाः
पुटककळकळस्वप्नकार्पासधूम्राः ।

---

99 प्रकरणे इति शेषः । 'स्तु नपुसके वक्ष्यते' ग.

100 'ल आत्मभूमिश्च' ग.

101 'र्यूपः' ग.

102 'गृहाद् बहिर्निर्गतदारुविशेषः' श.

103 'शुक्रशो' क. ग.

104 'तसमुदायः' श.

105 'ति सकीलः । की' क.

106 'पककणयो' ग.

[107]होमस्तोमान्तरायाः[108] प्रहरककलशालक्तकाः
[109]कुञ्जपुञ्जप्रस्थोपस्थोपसर्गस्तबक-
[110]नरककस्तूपजम्भाम्बरीषाः ॥ २६ ॥

एते पुंसि । यथा—अयं शृङ्गारः रसविशेषः । अङ्गारः दग्धदारु । कायः देहः । कुतपः छागलोमप्रावरणम् । कणरयः[111] शरविशेषः । उद्गीथः प्रणवः सा[Folio 29 b]मध्वनिश्च । भृङ्गारः कनकाळका । कुम्भः घटः । संग्रामः रणः । ग्रामः जननिवासः समूहश्च । यामः प्रहारः[112] । पुटकः भूर्जाद्यवयवः । कळकळः कोलाहलः । स्वप्न. [113]सुप्तिः । कार्पासः तूलः । धूमोऽग्निचिह्नम् । होमः हवनम् । [114]स्तोमः पुञ्ज समूहः क्रतुश्च । अन्तरायो विघ्न. । प्रहरकः यामः । कलशः कुम्भः । अलक्तकः यावकः । कुञ्जः वनगहनम् । पुञ्जः समूहः । प्रस्थः मानविशेषः सानुवाचकश्च । उपस्थः क[Folio. 30 a]र्मेन्द्रियविशेष । उपसर्गः उपद्रवः प्रादिश्च । स्तबकः गुच्छः[115] । नरकः निरयः[116] । (क)स्तूपः मृदादिसञ्चयः । जम्भः अशनम्, दैत्यविशेषश्च । अम्बरीषः भ्राष्टम्,[117] ऋषिश्च ॥

[118]इत्यदन्ताः परिसमाप्ताः ।

---

ज्ञातिदृत्यतिथिसारथिवस्ति-
ग्रन्थिपाणिमणयः क्रिमिकुक्षी ।

---

107 'हेम' ख.
108 'यप्र' ख. श.
109 'काः पुञ्जकुञ्जप्र' क.
110 'बकनिरयक' श.
111 'कणयः' क.
112 'प्रहरकः' ग.
113 'सुषुप्तिः' ग.
114 स्तोम इति नास्ति । ग.
115 'श्च । न' क.
116 'यकः' क.
117 'ष्ट्रम् ।' ग.
118 'इत्युद' क.

शालिकेळिकलयो[119] बलिमौली
ऊर्मिरञ्जलिपविध्वनिराशि ॥ २७ ॥

एते पुंसि । अयं ज्ञातिः [Folio. 30 b] स्वजनः । दृतिः [120]भस्त्रा-वाचकः[121] शब्दः, एक एवायं पुंसि । अतिथिः अपूर्वकालाभ्यागतः[122] । सारथिः सूतः । वस्तिः नाभेरधः । अस्या बहुत्वे वस्त्रदशावाचकत्वम् । ग्रन्थिः + + ग्रन्थलक्षणो का+विशेषः, पर्व, बन्धश्च । पाणिः करः । मणिः रत्नम् । केचिदस्य स्त्रीत्वमपीच्छन्ति—इयं मणिरिति । क्रिमिः कीटः । कुक्षिः उदर-पार्श्वम् । शालिः धान्यजातिः । केळिः परिहासः । कलिः कलहः अन्त्ययुगं च । बलिरुपहारः, अ[Folio 31 a]सुरश्च । मौलिः केश· किरीटं च । ऊर्मिस्तरङ्गः । चन्द्रस्यायं[123] स्त्रियामपि । अञ्जलिपविध्वनिराशीति समाहारै-कवद्भावः । अञ्जलिः करद्वयसम्पुटः । पविः वज्रम् । ध्वनिः शब्दः । राशिकूटः ॥

इतीदन्ताः ।

---

[124]त्सरुमेरूर्वारुचरूरु[125]मृत्यवः
पुरुः पशुः शङ्कुहनू ययुर्गडुः ।
कमण्डलुस्थाणुपला[126]ण्डु(पी ? से)लवः
सतर्कुरिक्षुर्[127]ऋतुसक्तवोऽसवः ॥ २८ ॥

---

119 'ललो ब' क.
120 'स्त्रवा' क.
121 'क एक' श.
122 'कालेऽभ्या' श.
123 'यमेव स्त्रि' श.
124 'सरु' क. 'रुमेरुर्धारुच' श.
125 'रूकु' क.
126 'लण्डु' ख. 'ण्डुपिप्लवः' श.
127 'कुंऋत्विक्षुस' ग. 'कुरिक्षुस्तृतु' क.

एते पुंसि । [128]त्सरुर्मुष्टिः खड्गादेः । मरुर्गन्धः । उ[Folio. 31 b]-र्वारुः[129] चिद्भिन्नफलम् । चरुः भाण्डविशेषः, हविष्यं च । ऊरुः जानुव[ङ्क्ष(र)णा]न्तरम्, सक्थि । मृत्युः अन्तकः । एष स्त्रीपुंसयोर्व्याडेः । पुरुः[130] यज्ञः, लोपः । पशुः गवादिः । शङ्कुः कीलकः । हनुः[131] मुखैकदेशः । स्त्रीपुंसयोरयं चन्द्रस्य । ययुरश्वः । गडुः[132] मुखरोगः । कमण्डलुः मुनिकुण्डिका । स्थाणुः छिन्नशाखो वृक्षः, शम्भुश्च । पलाण्डुः[133] लशुनप्रकारः । पीलुः [134]कालकम्, हव्यविशेषश्च । सतर्कुः सह तर्के[Folio. 32 a]ण (?) वर्त्तत इति सतर्कुः[135] सूत्रवेष्टनम्, अग्न्याधानभाण्डम्[136] । इक्षुः गुडादिप्रकृतिः । ऋतुः [137]वसन्तादिः । सक्तवः यवपिष्टविशेषः । असवः प्राणाः । एतयोर्नित्यबहुत्वं वक्ष्यते ॥

रेणुवेणुबिन्दुकन्दु-
कम्बुकन्तुजन्तुतन्तु ।
पांसुपीलु[138]सेतुधातु-
मन्युमायुपायुजायु[139] ॥ २९ ॥

[उदात्ता एते पुंसि ।] एषां समाहारैकवद्भावः । अयं रेणुः रजः । वेणुः वंशः । बिन्दुः जललवः[140] । कन्दुः [Folio. 32 b]पाकस्थानम् । कम्बुः शङ्खः । कन्तुः कोष्ठकम् । जन्तुः प्राणी । तन्तुः सूत्रगुणः । पांसुः

---

128 'सरु' क.

129 'धारु शुष्कफलम्' श.

130 'रुः प्रभूतः लोकः' श.

131 'नुः कपोलः' ग.

132 'डुः मूर्खःरो' श.

133 'लण्डुः' ख.

134 'पिप्लुः' श.

135 'र्कुः कश्मीरेऽश्वा(ण्टः?)रण इति प्रसिद्धम्' श.

136 'ण्डम् । ऋतुः ···दिः । इक्षुः ···तिः । स' क. 'ण्डश्च' ग.

137 'तुः शिशिरादि' ग.

138 'सुशेलुसे' क.

139 'जरायुः' क.

140 'लवः' इति नास्ति । क.

धूळिः । पीलुः[141] श्लेष्मातकः । सेतुः जलसंक्रामः । धातुः रसादिः, गैरिकादिः, भूवादिश्च । मन्युः संग्रामः, कोपश्च । मायुः पित्तम् । पायुः गुदम् । जायुः औषधम् ॥

इत्युदन्तान् दिङ्मात्रं प्रदर्श्याधुना [142]अतिव्याप्तिं [143]प्रदर्शयितुमाह—

**स्नायुश्मश्र्वादितोऽन्येऽपि**
**समासेऽह्नो यथा द्व्यहः** [Folio. 33 a] ।
**रात्रिश्चायमहोरात्रः**
**पन्था मन्था वणिक् तथा ॥ ३० ॥**

स्नायुश्मश्र्वादयः [144]नपुंसके । एभ्यो येऽन्ये उकारान्ताः[145] तेऽपि पुंसि । यथा—अयं नाकुः वलीकम् । अयं पिचुः कार्पासः । अयं वसुः न[दं] देशश्च तत्सामीप्यात् । किंशारुः धान्यशूकः । जायुः उल्बम् । मयुः लोष्टमर्दनकाष्ठः, आकू[त]श्चेत्येवमादयः । समासे ह्रो यथा द्व्यहः । अहन्शब्दो नान्तत्वात् नपुंसके उ[Folio 33 b]क्तः समासे पुंसि भवति । यथा—अयं द्व्यहः, त्र्यहः, पूर्वाह्णः, मध्याह्नः, अपराह्णः । रात्रिश्चेत्यादि । रात्रिशब्दः स्त्रीलिङ्ग[146] उक्तः; समासे तु पुंसि भवति । यथा—अयमतिरात्रः, अहोरात्रः, मध्यरात्रः, गणरात्रः, इत्यादि । "रात्राह्नाहाः पुंसि" (पा० सू०. २—४—२९) इति पुंस्त्वम् । पन्था मन्था वणिक्तथा । अयं पन्थाः मार्गः । "अपथं नपुंसकम्" (पा०सू०. २—४—३०) इति । मन्था मथनदण्डः । वणिक्[147]

141 'शेलुः' क.
142 'अभिव्या' ग.
143 'प्तिं द' ग.
144 'यः स्त्रीन' क.
145 'राः । ते' क.
146 'ङ्गे समासे पुंसि भवति' क.
147 'णिक्करा' श.

राटः । तथेत्यनेन एवम्प्रकारा[148] उपात्ताः । भिषक् परिव्रा[Folio. 34 a]ड् इत्येवमादयः पुंसि स्पष्टत्वान्न दर्शिताः ॥

श्रीचे[149]ष्टाद्याश्च निर्यासा इमनन्तो[150] यथाणिमा ।
घञ्प्रत्ययो यथा योग एरज्जयनयौ यथा ॥ ३१ ॥

श्रीचेष्टा[151] आदिः येषां ते श्रीचेष्टाद्याः निर्यासा निःस्रवाः[152] गन्धद्रव्याणि पुंसि । यथा—अयं श्रीचेष्टः[153] निर्यासविशेषः, कर्पूरः[154], सर्जरसः । हिङ्गुगुग्गुल्वोरुकारान्तत्वात् सिद्धम् । इदानीं प्रत्ययद्वारेण दर्शयन्ना[Folio. 34 b]ह—इमनन्तो यथाणिमा । इमन् अन्तो यस्य सः इमनन्तः पुंसि । यथा— अयं अणिमा, महिमा, गरिमा, लघिमा, प्रथिमा, शोणिमा, शुक्तिमा चेत्यादि । "पृथ्वादिभ्य इमनिज्वा" (पा० सू० ५—१—१२२) इति इमनिच्प्रत्ययः । घञ्प्रत्ययो यथा योगः । घञ्प्रत्ययः पुंसि भवेत् । यथा—अयं रोगः, यागः, पाकः, भेदः, छेदः, प्राकारः, प्रासादः, प्रसादः, विहार इत्येवमा[Folio. 35 a]दयः । वाकादयोऽप्येवमेव । अनुवाकः सूक्तम्, पाकः इत्यादि । एवं एरज्जयनयौ[155] यथा । एरच् "इवर्णान्ताद्धातोरच्प्रत्ययः" [156] । यथा—जि जये अयं जयः, नयः, वयः, पयः, नवः, सुश्रयः, प्रणयः, क्षयः, लयः, प्रलयः, आशयः, प्रशयः, अतिशय इत्येवमादयः ॥

अप्प्रत्ययः[157] करो यद्वद[158]थ्वन्तो नन्दथुर्यथा ।
नङ्प्रत्ययो यथा प्रश्नः क्यन्तः सन्धिर्निधिर्यथा ॥ ३२ ॥

---

148 'रः परिव्राट् प्राट् इत्येव' श.
149 'श्रीवेष्टा' श.
150 'मन्नन्तो' श.
151 'श्रीवेष्टा' श.
152 'निःस्रावाः' श.
153 'श्रीवेष्टः' श.
154 'मज्जरसः' श.
155 'रज्वाय' क.
156 का० वृ०. ३—३—५६.
157 'अप्रत्य' ग.
158 'दथन्तो' क, 'दघन्तो' ग,

अप्प्रत्ययः [Folio. 35 b] करो यद्वदिति। "ऋदोरप्" (पा० सू० ३—३—५७) ऋवर्णान्तादुवर्णान्ताच्च धातोरप्प्रत्ययो भवति। यथा—अयं करः कॄ विक्षेपे, भरः, जरः, हरः, तरः, गरः, चरः। उवर्णान्तात्—अयं लवः लू छेदने, भवः, प्रसवः, स्तवः, प्लवः, पवः। "ग्रहवृदृनिश्चिगमश्च" (पा० सू० ३—३—५८) इत्येतेभ्योऽप्प्रत्ययः। यथा—अयं ग्रहः, दरः, वरः, निश्चयः, गमः। "उपसर्गेऽदः" (पा० सू० ३—३—५९)। प्रघसः, विघसः[159]। एवमन्येऽप्यप्प्रत्ययान्ताः। अ[Folio. 36 a]थ्वन्तो नन्दथुर्यथा। अथुच् अन्तो यस्य सः अथ्वन्तः पुंसि। "ट्वितोऽथुच्" (पा० सू० ३—३—८९) ट्व्यनुबन्धत्वात् अथुच्प्रत्ययः। नन्दथुः आनन्दः। टुणादि समृद्धौ। वेपथुः[160] वेपृ कम्पने। श्वयथुः टु ओश्वि गति-वृद्ध्योः। क्षवथुः टुक्षु शब्दे। एवमादयोऽथुच्प्रत्ययान्ताः। नङ्प्रत्ययो यथा प्रश्नः। नङ्प्रत्ययः पुंसि। यथा—अयं प्रश्नः, प्रज्ञः, विश्नः, यत्नः, इति। "यज [Folio. 36 b] याचयत०" (पा० सू० ३—३—९०) इत्यादिना नङ्प्रत्ययः। याच्ञाशब्दस्य स्त्रीत्वमिष्यते। क्यन्तः सन्धिर्निधिर्यथा। किप्रत्ययान्तः शब्दः। "उपसर्गे घोः किः" (पा० सू० ३—३—९२) इति किप्रत्ययः। यथा—अयं सन्धिः सन्धानम्, जलधिः, अब्धिः, अम्बुधिः, वालधिः पुच्छम्, अन्तर्धिः कोष्ठागारम्, आदिः प्रथम इत्यादयः॥

कुटचादे रो डुपच्[161] कृत्वा
ह्रस्वे स्वार्थेऽपि पुंस्यमू[162]।
कुटीरोऽयं[163] शमीरोऽयं
शुण्डारः कुडु[164][Falio 37 a]पो यथा॥ ३३॥

159 'निघसः' ग.
160 'वेपृं कम्पने वेपथुः' क.
161 'डुपं कृत्वा ह्र' क.
162 'स्यमी' ग.
163 'शरीरो' ग.
164 'कुतुपो' ख.

कुट्यादे रप्रत्ययः, कुत्वाड्डुपच्प्रत्ययः। अमू एतौ ह्रस्वे द्योत्ये स्वार्थेऽपि विहितौ पुंसि भवतः। यथा—अयं कुटीरः, शमीरः, शुण्डारः। अयं कुडुप इति। "कुटी-शमी-शुण्डाभ्यो रः" (पा० सू०. ५-३-८८) इति रप्रत्ययः। "कुत्वा डुपच्" (पा० सू०. ५-३ ८९) इति डुपच्प्रत्ययः। ह्रस्वा कुटी कुटीरः। एवमन्ये ह्रस्वाः। [कृत्स्नः प्रस्थः।] कुतुपः चर्ममय स्नेहभाजनम्। कुटीरादिवचने [Folio 37 b] स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति स्वार्थिकत्वेऽपि पुल्लिङ्गता। एवं देव एव देवता, ओषधिरेवौषधम्, कर्म एव कर्म इत्यादि। पुंसीत्यनुवर्त्तमाने पुनः पुंसीति वचनात् उरच्छदः,[165] दन्तच्छदः, आकारः, गोचरः, वहः, निगमः, इत्येवमादयः घप्रत्ययान्ताः पुंसि। "पुंसि संज्ञायां घः प्रायेण" (पा० सू०. ३-१-११८) इति पुंस्येवोक्तत्वात् इह पुनर्नोक्ता॥

नख[Folio. 38 a][166]मखगळगुल्फस्वर्गदेवासु[167]राणां
कचकुचपरशूनामब्दपङ्कासिमासाम्।
ऋतुघननगदन्ताद्रिट्कराङ्घ्र्यब्धिदोषां
विषविषयशरोष्ठप्रग्रहाणां तथाख्याः॥ ३४॥

एषां नखादीनां शब्दानामाख्यानामान्यपि पुंसि भवन्ति। तत्र यथा नखाः—करजाः, कररुहाः, इत्यादयः। नखशब्दः पुन्नपुंसकयो[168]रेकेषाम्। मखश्च—अयं मखः, अध्वरः, सवः, इत्या[Folio. 38 b]दयः। क्रतुः सप्ततन्तुश्च उदन्तत्वात् सिद्धम्[169]। यज्ञशब्दस्य वचनं नङ्प्रत्ययान्तत्वात्। वाजपेय-राजसूययोर्नपुंसकता वक्ष्यते। गळस्य—अयं गळः, कण्ठः। ग्रीवाशब्दस्याकारान्तत्वात् स्त्रीत्वम्। गुल्फस्य—अयं गुल्फः

165 'च्छदादयो घ' श.
166 'खमुख' क.
167 'वा स्वरा' ग.
168 'योरप्येके' श.
169 पुल्लिङ्गत्वं सिद्धमित्यर्थः।

पादसन्धिः। स्वर्गस्य—अयं स्वर्गः, त्रिदिवः। स्वरित्यव्ययम्। त्रिविष्टपस्य नपुंसकतेष्यते। देवानाम्—अमराः, सुराः, गीर्वाणाः, मरुतः, इत्यादयः। असुराणा[Folio 39 a]म्—इमे असुराः, पूर्वदेवाः, दितिजाः, दैत्याः, शुक्रशिष्याः, पातालनिलयाः, दनुजा इत्येवमादयः। कचानाम्—इमे कचाः, केशाः, वालाः, अस्राः, इत्येवमादयः। अस्यास्रवाचकस्य नपुंसकता वक्ष्यते। कुचयोः-कुचौ, स्तनौ, उरोजौ, वक्षोजौ इत्येवमादयः। परशोरुकारान्तत्वात् स्त्रीत्वं सिद्धम्। तन्नाम्नोऽत्र[170]—अयं कुठारः, स्वधितिः इत्याद[Folio. 39 b]यः। अब्दस्य—अब्दः, वत्सरः इत्यादि। वर्षसमाप्रावृट्छरदामपि पुंस्त्वे प्राप्ते, वर्षशब्दस्य नपुंसकत्वम्। समा-शब्दस्याबन्तत्वात् स्त्रीत्वम्। प्रावृट्छरदोः स्त्रीत्वम्, शिशिरशब्दस्य नपुंसके वचनम्। [171]पङ्कस्य—अयं पङ्कः, कर्दमः, इत्यादयः। असेः—अयमसिः, खड्गः, कृपाणः, इत्यादयः। मासानाम्—अयं कार्त्तिकः, मार्गशीर्षः, पुष्यः, माघः, इत्येवमादयः। ऋतूनाम्—अयं वसन्तः, ग्रीष्मः, हेमन्तः। ([172]वर्षाशब्दस्याकारान्तत्वात् स्त्रीत्वम्। प्रावृट्छरदोः[173] स्त्री-प्रकरणपाठात्[174]। शिशिरशब्दस्य नपुंसके वचनम्)। घनस्य—अयं घनः, वलाहकः, जलदः, इत्यादयः। अभ्रशब्दस्य नपुंसकत्वं वचनात्। नग-[Folio. 40 a]स्य—अयं नगः, गिरिः, [स्तम्भश्च द्वयोरेव ग्रहणम्।] शैलः, पर्वतः इत्यादयः। गन्धमादनस्य नपुंसकता वक्ष्यते। दन्तस्य—अयं दन्तः, द्विजः, रदः, इत्यादयः। द्विषः—अयं द्विट्, अरिः, शत्रुः, इत्यादयः। करस्य—अयं करः, पाणिः, हस्तः, इत्यादयः। अब्धेः—अयमब्धिः, समुद्रः, अर्णवः, उदन्वान् इत्यादयः [Folio. 40 b]। जलध्यादीनां किप्रत्ययान्तत्वात् सिद्धम्। दोषः—अयं दोः, बाहुः, प्रचे(ष्टम्), भुजः। भुजबाह्वोरुभयलिङ्गता वक्ष्यते। विषस्य—अयं विषः, क्ष्वेळः, गरः,

---

170 पुल्लिङ्गता भवतीति शेषः।

171 पङ्कशब्दो न व्याख्यातः। क.

172 'वार्षा' क.

173 'रदौ स्त्री' ग.

174 स्त्रीत्व भवतीति शेषः।

मधुरकः, काळकूटः, विष्फुलिङ्गः, इत्यादयः । साक्षाद्विषस्य तु नपुंसकलिङ्गे पाठः विषमिति । विषयशब्दः सामान्यवचनः [Folio 41 a] । विषयाणाम्—अयं स्पर्शः, शब्दः, रसः, गन्धः इति । रूपशब्दस्य नपुंसके पाठः । अय विषयः गोचरः । विषयशब्दो देशवाच्यपि पुंस्येव । इमे पाञ्चालाः, मागधाः, मत्स्याः, चेदिकाः, सुह्माः । कुन्त्यावन्तिवृष्ण्यादयोऽपि विषयवाचिनः । शराणाम्—इमे शरा , पृषत्का , बाणाः, शिलीमुखाः, विशिखाः, इत्येवमादयः । इषु[175]शब्दस्योभयलिङ्गता वक्ष्यते । काण्डशब्दस्य नपुसके पाठः । ओष्ठस्य—अयमोष्ठ , दन्तच्छदः, इत्यादयः । प्रग्रहाणाम्—इमे प्रग्रहाः, रश्मयः, मयूखाः, घृण[Folio 41 b]यः । अंशुभान्वोरुदन्तत्वात् सिद्धम् । दीधितेस्तु स्त्रियां पाठः । तथा[176]ग्रहणादन्येऽपि ये नपुंसके न वक्ष्यन्ते ते पुंसि[177] वेदितव्याः ॥

इति भट्ट[178]भरद्वाजसूनोः पृ[179]थिवीश्वरस्य
कृतौ हर्षवर्धनकृ[180]तलिङ्गानुशासनटीकायां[181]
पुल्लिङ्गप्रकरणम्[182] ।

---

175 'इक्षुश' ग.
176 'था प्रग्रहाद' द.
177 'सि एव वे' श.
178 'ट्टदीप्तस्वामिसू' श. 'ट्टिभारद्वा' ग.
179 'नोः बलवागीश्व' श.
180 'नलि' ग.
181 'काया सर्वलक्षणाया पु' ग.
182 'णं समाप्तम् ॥' ग.

## अथ नपुंसकलिङ्गप्रकरणम् ।

अथ नपुंसकलिङ्गा उच्यन्ते—

त्रान्ता नपुंसके पुत्रवृत्रामित्रौपवस्त्र[Folio. 42 a]तः ।
छात्राच्चा[1]न्ये तथा मन्त्रान्मित्रमन्यत्र भास्करात् ॥ ३५ ॥

त्रः अन्तो येषां ते त्रान्ताः, नपुंसके भवन्ति यत्र नान्य(कृता ? क्रिया)तत्र भवत्यस्तीति योजयेत् । किं सर्व इत्याह—पुत्रवृ[2]त्रामित्रौपवस्त्रतः[3], छात्राच्चान्ये तथा [4]मन्त्रादिति, पुत्रादिभ्यो येऽन्ये त्रान्तास्ते सर्वे नपुंसके । तद्यथा—इदं शास्त्रम्, छत्रम्, दात्रम्, पवित्रम्, लवित्रम्, गात्रम्, गोत्रम्, [Folio. 42 b] पत्रम्, पात्रम्, क्षेत्रम्, नक्षत्रम्, लोत्रम्, आतपत्रम्, खनित्रम्, तोत्रम्, वादित्रम्; पौत्रम्, पतत्रम्, वक्त्रम्, अस्त्रम्, नेत्रम्, स्तोत्रम्, तन्त्रम्, सूत्रम्, श्रोत्रम्, चित्रम्, चरित्रम्, कळत्रम्, अमित्रम् इत्यादि । पु[5]त्रादीनां शब्दार्थयोर्भेदादतिव्याप्तिः प्राप्ता नपुंसकता प्रतिषिध्यते । अयं पुत्रः अपत्यम्, वृत्रः अरिः[6] दैत्यविशेषश्च । अमित्रः शत्रुः । उपवस्त्रः उपवासः । छात्रः शिष्यः । मन्त्रः षाड्गुण्यसम + नां +++++श्च । चशब्दस्यानुक्तसमुच्चया[Folio. 43 a]र्थत्वात् क्वचित् सपत्रनिष्पत्रौ च । तथा च वररुचिः—"ज्ञेयौ सपत्रनिष्पत्रौ" इति । विषयविभागेन परिभाव[7]यन्नाह—मित्रमन्यत्र भास्करा-

---

1 'त्रादन्ये' ग.

2 'त्रमित्रा' क.

3 'स्त्रकः' क.

4 'था त्रान्तादिति' ख.

5 'पत्रा' क. 'पुत्रशब्दादीना भे' ग.

6 'रिः तमः दै' क.

7 'भाषय' क.

दिति । मित्रशब्दो नपुंसके भास्करादन्यत्र यदि भास्करवाची न भवति । इदं मित्रं सुहृत् । अयं मित्रः भास्करः ॥

न्याय्ये[8] सारमृतं सत्ये पुण्यं धर्मे कृतं युगे ।
कर्मादौ कारकं कूटम[Folio. 43 b]राशौ ब्राह्मणं श्रुतौ ॥

न्याय्ये सारमिति । न्यायादनपेतं न्याय्यम् । तस्मिन् सारशब्दो नपुंसके । [जये धरित्र्याः पुरमेव सारं सारङ्गलोचना] । अन्यत्र चन्दनसारः । ऋतं सत्ये—सत्ये वर्त्तमानं ऋतं नपुंसके । अन्यत्र ऋतः गतः अर्थवत्, ऋ गतौ । पुण्यं धर्मे—धर्मे वर्त्तमानः पुण्यशब्दो नपुंसके । पुण्यं धर्मः, अन्यत्र पुण्यो देशः । कृतं युगे [Folio. 44 a]—युगे कृतं नपुंसके । इदं कृतमादियुगम् । अन्यत्र तु कृतः । कर्मादौ कारकम्—कर्म-करण-सम्प्रदानादिषु वर्त्तमानं कारकं नपुंसके । कर्म, करणम्, सम्प्रदानं वा । आदिशब्दस्य प्रकारवाचित्वादेतान्यपि कारकाणि कर्तृवर्जितानि नपुंसके ज्ञेयानि । इदं सम्प्रदानं कारकमधिकरणं चे[Folio. 44 b]ति करणं वक्ष्यते । कर्मणो नान्यत्र तत्सिद्धम् । एतान्यपि संज्ञाव्युत्पत्तये कथ्यन्ते । कूटमराशौ—कूटं नपुंसके । अराशौ इति अराशिविषये वर्त्तमानः । इदं कूटमसत्यं दम्भो माया निश्चलं शृङ्गं च । अराशाविति किम्? अयं कूटः राशिः धान्यकूटः, यवकूटः । ब्राह्मणं श्रुतौ— श्रुतिविषये नपुंसकम् । इदं ब्राह्मणं[9] कुलं श्रुत्यैकदेशश्च । अन्य[Folio. 45 a]त्र ब्राह्मणो द्विजः ॥

वीर्ये शुक्रं ऋतौ धर्मं वस्वसत्त्वे खलं तथा ।
कुशं केऽनुमतौ काममके[10]शेऽस्त्रं परे परम्[11] ॥३७॥

---

8 'न्याये सा' क.

9 'ण श्रु' क.

10 'मक्लेशे' क.

11 'रेवर' क.

यथा—इदं शतम्, सहस्रम्, अयुतम्, लक्षम्, इत्यादयः। कोटिः स्त्रिया-मुक्तैव। [18]रात्रिः संख्यादिका—रात्रिशब्दो सङ्ख्यापूर्वो नपुंसके। इदमेक-रात्रम्, द्विरात्रम्, त्रिरात्रम्, चतूरात्रम्, पञ्चरात्रम्, षड्रात्रम्, इत्यादयः। [Folio. 47 b] सङ्ख्येति किम्? अन्यत्र—अयमहोरात्रः। [19]स्थूणा गृहादूर्णा च नपुंसके; इदं गृहस्थूणम्, इदं शशोर्णम्। अन्यत्रेयं[20] स्थूणा शालादिस्तम्भः। इयमूर्णा अविरोमा॥

इदानीं प्रत्ययद्वारेण दर्शयन्नाह—

**ष्यञ्प्रत्ययो यथा शौ[21]क्ल्यं जाड्यं ब्राह्मण्यमेव च।**
**अञ् यथाश्वं च कौमारं वु[Folio. 48 a]ञ्यथा रामणीयकम्॥**

ष्यञ्प्रत्ययो यस्य सः ष्यञ्प्रत्ययः। ष्यञ्प्रत्ययसिद्धः शब्दो नपुंसके। यथा—इदं शौक्ल्यं[22] शुक्लता। जाड्यं जडता। ब्राह्मण्यं ब्राह्मणता। एवं कार्ष्ण्यम् दार्ढ्यम्, मौढ्यम्, मौर्ख्यम्, कात्स्न्र्यमित्यादयः। "वर्णदृढादिभ्यः ष्यञ्" (पा० सू०. ५-१-१२३) उपरिष्टादत्रानुवर्त्तत एव। अञ् यथाश्वं च कौमारमिति। अञ्प्रत्ययान्तो नपुंसके। "प्राणभृज्जातिवयोवचनोद्गात्रा-[Folio. 48 b]दिभ्योऽञ्" (पा० सू०. ५—१—१२९)। यथा—इदमाश्वम्, शाशम्, औष्ट्रम्, कौमारम्, केदारम्, औद्गात्रम्, प्रातिहतमित्यादि। वुञ् यथा—रामणीयकम्, साहायकम्। "द्वन्द्वमनोज्ञादिभ्यश्च" (पा० सू०. ५–१–१३३) इति वुञ्। इदमाहिनकुलकम्, मानोज्ञकम्[23]। "सहायनटाभ्यां वा" (वार्त्तिकम्) इति वुञ्। साहायकम्, नाटकम्, इत्यादि॥

---

18 'क्ता। इव स रात्रिः सं' क.
19 स्थूणा इति नास्ति। क.
20 'य गृहस्थू' क.
21 'शौक्रयं जा' क.
22 'शौक्रय शुक्रता' क.
23 'कम् इत्यादि' क.

ढग्यथा चारुकापेयमण[24]न्तो यौवनं यथा[25] ।
छान्तो[26] यथाच्छावाकीयं यान्तः [27]सख्यं यथोदितम् ॥

ढक्प्रत्ययो नपुंसके । यथा—चारुकापेयम् [Folio. 49 a]रम्यं चापमस्य कपेः । एवं ज्ञातावपि । "कपिज्ञात्योर्ढक्" (पा० सू०. ५—१—१२७) । अणन्तो यौवनं यथा—[28]अण्प्रत्ययान्तो नपुंसके । यथा—इदं यौवनम्। "हायनान्तयुवादिभ्योऽण्" (पा०सू०. ५-१-१३०) द्विहायनस्य भावः कर्म वा द्वैहायनम्, यौवनम्, स्थाविरम्। इगन्तः—मार्दवम्, लाघवम्, पाटवमित्यादि । छान्तो यथा —अच्छावाकी-[Folio 49 b]यम्, मैत्रावरुणीयम् । यान्तः [29]सख्यं यथोदितम् । यप्रत्ययान्तो नपुंसके । सङ्ख्यम् । यथोदितं यथोक्तम् । "दूतवणिग्भ्यां च" (का० वृ०. ५—१—१२६) इति यः । इदं सख्यम्[30], दूत्यम्, वाणिज्यम्[31] । वणिज्याशब्दस्याकारान्तत्वात् स्त्रीत्वं सिद्धम् ॥

यग्यथा साधुनार्पत्यं सर्वेऽमी भावकर्मजाः ।
समूहार्थाश्च भैक्षाद्याः [Folio. 50 a] त्वान्तो गोत्वमिदं यथा ॥

यक्प्रत्ययो नपुंसके । यथा—साधुनार्पत्यम् । "पत्यन्तपुरोहितादिभ्यो यक्" (पा०. सू०. ५—१—१२८) । नार्पत्यम्, प्राजापत्यम्, सैनापत्यम्, पौरोहित्यम्, इत्यादि । सर्वेऽमी भावकर्मजाः—अमी ष्यञा-

---

24 'मजन्तो' ग.
25 'नं तथा' ग.
26 'जान्तो' क.
27 'सख्यं' क.
28 'आण्' क.
29 'संख्यं' क.
30 "सख्युर्यः" (पा० सू०. ५—१—१२६) इत्यनेन सख्यमिति । 'इदं दू' ग.
31 वणिज्यमिति काशिका । माधवस्तु—वणिज्याशब्दः स्वभावात् स्त्रीलिङ्गः । भाव एवायं प्रत्ययो न कर्मणीत्याह । भाष्ये तु "दूतवणिग्भ्या च" इति नास्त्येव । ब्राह्मणादित्वाद्वाणिज्यमपि ।

दयो यप्रत्ययाः प्रागुक्ता भावे कर्मणि च भवन्ति । यथा—शुक्लस्य भावः कर्म वा शौक्ल्यम् । जडस्य भावः कर्म वा जाड्यम् । ब्रा[Folio. 50 b]-ह्मणस्य भावः कर्म वा ब्राह्मण्यम् । अश्वस्य भावः कर्म वा आश्व्यम् । कवे[32]र्भावः कर्म वा काव्यम् । इत्येवमाद्यन्यत्रापि वाक्यं विचेयमिति । समूहार्थाश्च भैक्षाद्याः[33]—"तस्य समूहः" इत्येतस्मिन्नर्थे ये भैक्षाद्याः शब्दाः ते नपुंसके भवन्ति । "तस्य समूहः" (पा० सू०. ४—२—३७), "भिक्षादिभ्योऽण्" (पा० सू०. ४—२—३८) । भिक्षाणां समूहो भैक्षम् इत्यादि । "गोत्रोक्षोष्ट्रोरभ्रराजराज[Folio. 51 a]न्यराजपुत्रवत्स-मनुष्याजाद्वुञ्" (पा० सू०. ४—२—३९) । गोत्रात्तावदौपगवमित्यादि । औष्ट्रकम्, औरभ्रकम्, राजकम्, राजन्यकम्, राजपुत्रकम्, वात्सकम्, मानुष्यकम्, आजकम् । "केदाराद्यं च" (पा० सू०. ४—२—४०) । कैदारिकम् । कैदार्यम् । [34]गाणिक्यं गणिकानां समूहः । "ढञ् कवचिनश्च" (पा० सू०. ४ २—४१) । कावचिकम्[35] । "ब्राह्मणमाणववाडवाद्यत्" (पा० सू०. ४—२—४२) । ब्राह्मण्यम्, माणव्यम्, [36]कापोतम्, [37]मायूरम्, वाडव्यम् । "चरणेभ्यो धर्मवत्" [Folio. 51 b] (पा० सू०. ४—२—४६) । कठानां धर्मः समूहो वा काठकम्, कालापम्, छान्दोग्यम् । "अचित्तहस्तिधेनोष्ठक्" (पा० सू०. ४—२—४७) । आपूपिकम्, हास्तिकम्, धैनुकम् । "केशाश्वाभ्यां यञ्छावन्यतरस्याम्" (पा० सू०. ४—२—४८) । केशीयम् कैश्यम्, कैशिकम्, आश्वम्, अश्वीयमिति । त्वान्तो गोत्वमिदं यथा । त्वप्रत्ययान्तो नपुंसके । "तस्य भावस्त्वतलौ" (पा० सू०. ५—१—११९) इति त्वप्रत्ययः—यथा—इदं गोत्वम्, पशुत्वम्, ब्राह्मणत्वमित्यादि ॥

---

32 'कपेर्भावः कर्म वा कापेयम्' क.

33 'द्याश्च' क.

34 "गणिकाया अञिति वक्तव्यम्" (वार्त्तिकम्) ।

35 कवचिनां समूह इत्यर्थः ।

36, 37 "अनुदात्तादेरञ्" (पा० सू०. ४-२-४४) ।

भावे नपुंस[Folio 52 a]कत्वं[38] चे
त्येष पाणिनिचोदितः ।
प्रियेणेह स्थितं भुक्त-
मासितं शयितं तथा ॥ ४२ ॥

क्तान्ता[39] नपुंसके भवन्ति, पाणिनिनैवमुक्तम् । प्रियेण स्थितमित्यादि ॥

अकर्तरि तथानन्ताः शासनं शयनं यथा ।
उसन्ता धनुराद्याः स्युरिसन्ताः सर्पिरादयः ॥ ४३ ॥

अनप्रत्ययान्ता अकर्तरि नपुंसके । "करणाधिकरणयोश्च" (पा० सू०. ३–३–११७) इति ल्युट् । "युवो[Folio 52 b]रनाकौ" (पा० सू०. ७–१–१) इत्यनादेशः । यथा—इदं शासनम्, शयनम् । एवं यानम्, दानम्, आदानम्, करणम् इत्यादयः । अन्यत्र कर्तर्यनन्ता. पुंसि–दहतीति दहनः, ज्वलनः, पवन', मधुसूदनः, आनन्दवर्धनः, इत्यादयः । तथाग्रहणात् पुण्यसुदिनाभ्यामह्नो नपुंसकत्वम्—पुण्याहम् , सुदिनाहम् । क्रियाविशेषणानां च—पटु पचति, शोभनं पचति, साधु गच्छति । उसन्ता धनुराद्याः स्युः—[Folio 53 a] उस् अन्तो येषां ते उसन्ताः, धनुराद्यो येषां ते धनुराद्याः नपुंसके स्युः । (गभे पेयुः जाने तसि?) । "अर्तिपृवपियजितनिधनितपिभ्यो नित्" (उ० सू०.), अरुः, परुः, वपुः, यजुः, तनुः, धनुः, तपुः इत्येवमादयः । इसन्ताः सर्पिरादयः—इस्प्रत्ययान्ता नपुंसके । "अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः"

---

38 'के क्तान्ता ज्ञेयाः पाणिनिनोदितम्' श.

39 'निष्ठा च' इति नपुंसकाधिकारे पाणिनीयलिङ्गानुशासनसूत्रम् । इदमपि सूत्रम् 'नपुसके भावे क्तः' इत्यनेन गतार्थम् । अत्र निष्ठापद क्तस्य बोधकम् ।

(उ० सू०.) । इदं सर्पिः, शोचिः, छदिः, छर्दिः । [40]अर्चिश्शब्द-स्योभयलिङ्गता वक्ष्यते [Folio 53 b] ॥

इति[41] प्रत्ययान्ता उक्ताः ।

इदानीमकारान्तान् दर्शयितुमाह—

कौतुकचूचुकचित्रकशाकं
रूपकदीपकवार्त्तिकतोकम् ।
उल्मुकशुल्कसमीकमनीकं
क्षारककोरकमौक्तिकवल्कम्[42] ॥ ४४ ॥

कौतुकं च चूचुकं च एतयोः समाहारैकवद्भावः । एवमन्यत्रापि समासो विधेयः । एते शब्दा नपुंसके । इदं कौतुकं कुतूहलम्, मङ्ग[43]लसूत्रं च । चूचुकं स्तन[Folio. 54 a]मुखम् । चित्रकं तिलकम्, द्रव्यविशेषश्च । शाकं वास्तुकादि, वृक्षवाचिनस्तु शाकस्य पुंस्त्वमुक्तम् । रूपकं काव्यालङ्कार-विशेषः, हिरण्यमुद्रा च । दीपकं काव्यालङ्कारादिविशेषः । वार्त्तिकं भाष्य-[44] व्याख्यानकम् । तोकं अपत्यम् । उल्मुकं (अ ?म)ला(क ?त)म् । शुल्कं राजग्राह्यो भागः । समीकं रणः । अनीकं सैन्यम् । क्षारकं मुकुळम्, भाण्डविशेषश्च । कोरकं मुकुळम् । मौक्ति[Folio. 54 b]कं मुक्ताफलम् । वल्कं तरुत्वक् ॥

---

40 इकारान्तोऽप्ययम् । यथा—"अग्नेर्भ्राजन्ते अर्चयः" इति ।

41 'इनिप्र' क.

42 'कशल्कम्' श.

43 'सङ्गसू' श.

44 '·ष्यसूत्राणि' श. सर्वत्रापि भाष्यव्याख्यानरूपमेव वार्त्तिकम् । व्याकरणे तु भाष्यस्य मूलभूतं दृश्यत इति विशेषः ।

दुःखसुखाङ्गदलिङ्गयुगाङ्गं
घ्राणत्रिणे[45]रिणपक्कणशृङ्गम् ।
काकुदकन्द[46]पदास्पदतुन्दं
वृन्दमृधायुधयुद्धकुसीदम् ॥ ४५ ॥

एते[47] शब्दा नपुंसके । इदं दुःखं कृच्छ्रम् । सुखं आनन्दः । अङ्गदं केयूरम् । लिङ्गं चिह्नम्, शिश्नं च । युगं युग्मम् । अङ्गम् अवयवः, शरीरम्, कायश्च । घ्राणं नासा । त्रिणं(घटः ?) । [48]इरिणं ऊषरम् । पक्कणं चण्डाल-गृ[Folio. 55 a]हम् । शृङ्गं विषाणम्, शिखरं च । काकुदं तालु । कन्दं मूलं सूरणादि । पदं स्थानम्, सुप्तिङन्तं च । आस्पदं प्रतिष्ठा । तुन्दं उदरम् । वृन्दं निकरम् । मृधं रणः । आयुधं प्रहरणम् । युद्धं संग्रामः । कुसीदं हिरण्यादिप्रयोगवृद्धिजीवनम् ॥

[49]पौतवदैवशरावशवोल्बं[50]
भेषजबीजविषांशुकसान्त्वम् ।
किल्बिषकल्मष[51]वर्षपुरीषं [Folio. 55 b]
साध्वससाहसकीकसकिण्वम्[52] ॥ ४६ ॥

एते शब्दा नपुंसके । इदं [53] पौतवं द्रव्यम्, + + + (इत्यर्थः) । दैवं प्राकृतं कर्म । शरावं वर्धमानकम् । शवं मृतशरीरम् । उल्बं जरायुः । भेषजमौषधम् । बीजं वपिद्रव्यम्, मन्त्राद्यक्षरविशेषश्च

45 'तृणारिण' श.
46 'दकुन्द' क.
47 'एतच्छब्दं नपुंसकम्' क.
48 'ईरि' ? श.
49 'धौत' क.
50 'शरोल्बं' क.
51 'षपर्वपु' क.
52 'सकीलम्'' ग.
53 'दं धौतवं मेध्यम्' क

विषं[54] मधुरकम्। अस्यान्ये पर्यायाः पुंस्युक्ताः । अंशुकं प्रावरणम् [Folio. 56 a]। सान्त्वं प्रियवाक्यम्। किल्बिषं पापम्। कल्मषं पापमेव। वर्षं संवत्सरः, भारतादिवर्षं च। पुरीषं विट्[55]। साध्वसं भयम्। साहसं दुष्करं कर्म। कीकसमास्थि। किण्वं दुन्दु(हं), सुराद्रव्यं च, द्रव्यविशेषश्च ॥

अग्रकलेबरपारमपारं
चत्वरचामरचीवरचीरम् ।
[56]तीरकरीरशरीरमुशीरं
क्षीरककुन्दरजीरमगारम् ॥ ४७ ॥

एते शब्दा नपुंसके वर्त्तन्ते। अग्रं प्रान्तः [Folio. 56 b]। कलेबरं शरीरम्। पारं नद्यादेः समाप्तिः।अपारम् अर्वाक्तीरम्। चत्वरं चतुष्पथः। चामरं व्यजनम्। चीवरं भिक्षुवसनम्। चीरं मुनिवासः। तीरं कूलम्। करीरं घटः, वंशाङ्कुरं च। अस्य तरुवाचिनः पुंस्त्वमेव। शरीरं देहः। उशीरं गन्धद्रव्यम्। क्षीरं पयः। ककुन्दरं नितम्बकूपकः[57]। जीरमजा-(जी?दि)। अगारं गृहम् ॥

द्वापरकेसरगोपुर[Folio. 57 a]वैरं
पञ्जरमन्तरमम्बरराष्ट्रम् ।
पुष्करमक्षर[58]मूषरमभ्रं
श्वभ्रमुपह्वरगह्वरचक्रम् ॥ ४८ ॥

---

54 विषमिति नास्ति। क.

55 'विष्टिः' ग.

56 'क्षीरककुन्दरजीरमगारं तीरकरीरशरीरमुशीरम्' श.

57 'कं' क.

58 'क्षमम्' क.

एते नपुंसके । इदं द्वापरं युगविशेषः । केसरं सिंहसटा । गोपुरं पुरद्वारम् । वैरं द्वेषः । पञ्जरं + + स्थानम् । अन्तरं मध्यम्, छिद्रं च । अम्बरं वासः । नभोऽभिधायिनोऽस्य नपुंसकता सिद्धैव । राष्ट्रं जनपदः । पुष्करं तीर्थविशेषः [Folio. 57 b] । पद्मवाचिनोऽस्य नपुंसकता सिद्धैव । अक्षरं वर्णः । ऊषरं इरिणः । अभ्रं मेघः । अस्यान्ये पर्यायाः पुंस्युक्ताः । श्वभ्रं प्रपातः । उपह्वरं रहः । गह्वरं[59] प्रत्यन्तदेशः । चक्रं आयुधविशेषः, कुलालचक्रम्, समूहः ॥

अङ्गण[60]दंसनवेतनवस्त्रं
गृञ्जनयोजनरत्नवितानम् ।
[61]चिह्नदिनाजिनमन्नमपानं
सञ्जवनायनशिश्नखलीनम् [Folio. 58 a] ॥ ४९ ॥

एते नपुंसके । इदमङ्गणं[62] प्राङ्गण.[63] । दंसनं सन्नाहः । वेतनं भृतिः । वस्त्रं वासः । गृञ्जनं पलाण्डु[64]विशेषः । योजनमध्वप्रमाणविशेषः । रत्नं जातावुत्कृष्टम्, मणिश्च । वितानं[65] चन्द्रोदयः, करञ्जकं शून्यं च । अस्य मुख्यस्य पुंस्त्वम् । चिह्नं लिङ्गम् । दिनं दिवसः । [66]अजिनं मृगचर्म । अन्नं शाल्यादि यवादि । अपानं गुदः । सञ्जवनं चतुश्शालम् । अयनं उत्तरदक्षिणादिगभिगमनं सूर्या[Folio 58 b]दीनाम् । शिश्नं मेढ्रः । खलीनं खलिता ॥

---

59 'रं गुहा । च' ग.

60 'ङ्गनदं' क. ग.

61 'न्हजि' क.

62 'ङ्गनं' क.

63 'ङ्गनः' क.

64 'ण्डुजातिः' ग.

65 'नं तुच्छकं शू' ग.

66 अजिनमिति नास्ति । क.

जघनाञ्जनभाजनसारसनं
तुहिनं सवनं भवनं भुवनम् ।
व्यसनं व्यजनं [67]वृजिनं मिथुनं
पुळिनं लशुनं निधनं प्रधनम् ॥ ५० ॥

एते नपुंसके । जघनं कट्याः पूर्वो[68]भागः स्त्रियाः । अञ्जनं धातुद्रव्यं नेत्रप्रियम् । भाजनं भाण्डम् । सारसनं मेखला, अधोव[69]सनग्रन्थनं च । तुहिनं तुषारः[70] । सवनं कालः । भवनं गृहम् । भुवनं जगत् । व्यसनं मृगयादिव्यस[Folio 59 a]नम् । व्यजनं चामरादि । वृजिनं पापम् । (कषायिनं खर्म्मख? चर्म च) । मिथुनं स्त्रीपुंसौ । पुलिनं द्वीपः । लशुनं पलाण्डुजातिः । निधनं मरणम् । प्रधनं[71] रणः गवादिधनं च ॥

अजिरं पिठरं शिबिरं शिशिरं
शिखरं बळिशं कुलकं [72]कबकम् ।
निकुरुम्बकुडु[73]म्बकदम्बकभं
चिबुकं बुकगैरिकबिम्बमघम् ॥ ५१ ॥

एते नपुंसके । इदमजिरं अङ्गणम् । पिठरं स्थाली । शिबिरं स्कन्धा-[Folio. 59 b]वार[74]विशेषः । शिशिरं माघफाल्गुनौ । ऋतुवाचिनोऽन्ये पुंस्युक्ताः । शिखरं शृङ्गं गिरेः । बळिशं मत्स्य[75]वेधनम् । कुळकं [76]वृत्त-

67 'व्रजि' क.
68 'पूर्वभा' क.
69 'धोवासोग्र' ख.
70 तुषार इति नास्ति । क.
71 'प्रथनं' क.
72 'कवकम्' श.
73 'कुटुम्ब' क.
74 'रः' क.
75 'त्स्यग्रहणम्' क.
76 'कं श्लोकप' श.

पञ्चकादिविरचितं काव्यम् । [77]कबकं उद्भिदो[78] द्रव्यविशेषः । निकुरुम्बः समूहः । कदम्बकं समूहः । कुडुम्बकं समूहः । भं नक्षत्रम् । चिबुकं अधरस्याधः । बुकं पुष्पविशेषः । गैरिकं धातु[79]विशेषद्रव्यम् । बिम्बं सूर्यादिमण्डलम्, द्रव्यानुकृति[Folio 60 a]श्च । अघं पापम् ॥

कुलकूलकुकूलदुकू[80]लदलं
हरितालपलालकपालपलम् ।
[81]छलकज्जलकुड्मललो[82]लबलं
शलशाड्वलशैव[83]लशीलशिलम् ॥ ५२ ॥

एते नपुंसके । इदं कुलं वंशः समूहश्च । कूलं तीरम् । कुकूलं श्वभ्रम्, तुषाग्निश्च । दुकूलं वासोविशेषः । दलमर्धम् । वर्णवाचिनोऽस्य नपुंसकता सिद्धैव । हरितालं धातुद्रव्यम् । पलालं धान्यनाळम् । कपालं शिरोऽस्थि । [Folio. 60 b] पलं कर्षचतुष्टयम् । मांसवाचिनोऽस्य नपुंसकता सिद्धैव । पलं मानविशेषश्च । छलं छद्म । कज्जलमञ्जनम् । कुड्मळं मुकुलम् । [84]लोलं शिरःप्रावरणम् । बलं सहः, साधनं च । शलं श्वाविडङ्गरुहः । शाड्वलं नवतृणानि । शैवलं जलतृणम् । शीलं चारित्रम् । शिलं मणिः ॥

वललं गवलं शललं[85] कबलं
शकलं[86] पटलं मुकुळं कमलम् ।

---

77 'कबळं' क. 'कवकं' श.
78 'भिन्नद्र' क.
79 'तुद्र' क.
80 'दुगूल' श.
81 'फल' श.
82 'ड्मलखोलवलम्' श.
83 'लशेव' श. क.
84 'खोल' श.
85 'कवलं शललं' श.
86 'शमलं २ कलं पटलं मुकुळम्' श.

स्थलजङ्गलमङ्गलमूलफलं
सकुतू[Folio. 61 a]हलशल्मल[87]नाळनळम् ॥

एते नपुंसके। इदं वललं[88] तिलकल्कम्। गवलं महिषशृङ्गम्। कबलं ग्रासः। शललं श्वाविडङ्गरुहः। शकलं खण्डः। पटलं छदिः, समूहश्च। मुकुळं कोरकम्। कमलं पङ्कजम्। स्थलं निर्जलं स्थानम्। जङ्गलं अरण्यम्। मङ्गलं प्रशस्तम्। मूलं कन्दम्। फलं शुभाशुभकर्मविपाकः, आम्रादि च। कुतूहलं कौतुकम्। सकुतूहलं सह कुतूहलेन वर्त्तत [Folio. 61 b] इति। शल्म[89]लं होमः। नाळं पद्माद्याधानम्। सुषिरं काष्ठादिघटितं च। नळं नळम्[90] ॥

स्थण्डिलमण्डलकुण्डलकुण्डं
शम्बलमञ्चलवल्कलवल्कम्।
जापकयावकयुग्मतटाकं
जालमहानसमङ्गुलचेलम् ॥ ५४ ॥

एते नपुंसके। इदं स्थण्डिलं भूः। मण्डलं देशः मर्यादाकृतं च। कुण्डलं (सप्ता?कर्णा)भरणविशेषः। कुण्डं वह्न्याधानस्थानवि[Folio. 62 a]शेषः। शम्बलं पाथेयम्। अञ्चलं वस्त्रैकदेशः। वल्कलं दारुत्वक्। वल्कं दारुत्वगेव। जापकं कालेयकम्। यावकं अलक्तकम्। युग्मं युगं पटादेः। तटाकं खनिः। जालं आनायः समूहश्च। महानसं पाकस्थानम्। अङ्गुलं प्रमाणविशेषः। चेलं वस्त्रं गर्हितं च ॥

---

87 'लकश्मल' क.
88 'पलुलं' क.
9 'कश्मलं मोहः' क.
90 'नवम्' ग.

पातालशै[91]वालहिमालवाल-
कङ्कालसौवर्च[92]लचक्रवाळम् ।
लाङ्गूलमाभी[93][Folio 62 b]लमुलूखलालं
कोलाहलोद्दालतलान्तराळम् ॥ ५५ ॥

एते नपुंसके । इदं पातालं रसातलम्, बडवामुखं च । शैवालं शैवलम् । हिमं तुहिनम् । आलवालं आवार्यम्, द्रवतोऽम्भसो निवारणं वृक्षादेः । कङ्काळं कायास्थि, मृतशरीरं च । सौवर्चलं कृष्णलव[94]णम् । चक्रवालं समूहः । लाङ्गूलं पुच्छम् । आभीलम्[95] आभीरम् रलयोर[Folio. 63 a]विशेषात् । उलूखलं धान्यखण्डनभाण्डम् । अलं वृश्चिकपुच्छम् । कोलाहलं कळकळः । उद्दालं नदीपङ्कः । तलं स्थलं ऊर्ध्वमधश्च । अन्तरालं मध्यम् ॥

मालालजम्बालशिलावचूड-
मालीढहालाहलवाजपेयम् ।
अष्टापदं कोटरराजसूय-[96]
पीयूषवीतंसकवर्धमानम् ॥ ५६ ॥

एते नपुंसके । इदं मालं कपटः । अलं अनर्थः । जम्बालं पङ्कः [Folio. 63 b] । अन्ये पङ्कवाचिनः पुंस्युक्ताः । शिलं कणिशम् । अवचूडं शेखरः । आलीढं प्रत्यालीढं च स्थानविशेषौ । हालाहलं विषम् । विषवाचिनोऽन्ये पुंस्युक्ताः । वाजपेयं यज्ञविशेषः । अन्ये यज्ञवाचिनः

---

91 'शेवा' श.
92 'लकाकतूलम्' क.
93 'माहील' क.
94 'ण:' क.
95 'आमीलं कच्छः' ग.
96 'यं पी' क.

पुंस्युक्ताः । अष्टापदं चतुरङ्गफलकम् । कोटरं वृक्षादेः सुषिरम्, अभ्यन्तरं च । राजसूयं यज्ञविशेषः । एता[Folio. 64 a]वेव वाजपेय-राजसूय-शब्दाविह । पीयूषममृतम् । वीतंसकं पञ्जरः । अत्र स्वार्थे कः छन्दोवशात् । वर्धमानं शरावः ॥

लोष्टं मधूच्छिष्टकचीनपिष्टं
शृङ्गाटकं संवन[97]नोदपाने[98] ।
त्रिविष्टपं वर्णकगन्धमादनं
हैयङ्गवीनं मधुपर्ककार्म्णम् ॥ ५७ ॥

एते नपुंसके । इदं लोष्टं मृत्पिण्डः । मधूच्छिष्टकं सिक्तम्[99] । अत्रापि[100] स्वा[Folio 64 b]र्थे एव कः । चीनपिष्टं सिन्दूरम् । शृङ्गाटकं चतुष्पथम्, जलजो[101] द्रव्यविशेषश्च । संवननं (कार्म्णम्) । उदपानं खनिः (?) । त्रिविष्टपं स्वर्गः । स्वर्गवाचिनोऽन्ये पुंस्युक्ताः । वर्णकं चन्दनम् । गन्धमादनं गिरिविशेषस्य नाम । गिरिवाचिनोऽन्ये पुंसि । हैयङ्गवीनं नवनीतम् । मधुपर्कं मध्वादि देवानामर्घ्यम् । कार्म्णं वशीकरणम् ॥

आतोद्यवाद्येन्द्रियगद्यपद्य-
नैपथ्यतथ्यं [Folio. 65 a] भयमूल्यमाल्यम् ।
आश्चर्यतूर्याव्ययजन्यसैन्य-
सान्नाय्यपार्यालि[102]कलास्यसस्यम् ॥ ५८ ॥

---

97 'वसनो' क.
98 'पानम्' क.
99 'सिक्थम्' ग
100 'त्र स्वार्थे कः' क.
101 'लद्र' श. हे०—जलोद्भवः कन्दः।
102 'लितला' श.

एते नपुंसके। इदमातोद्यं वाद्यसमुदायः। वाद्यं वादित्रम्। इन्द्रियं श्रोत्रादि। गद्य[103] वृत्तबन्धहीनम्। पद्यं वृत्तबद्धम्। नैपथ्यं वेषकल्पना। तथ्यं सत्यम्। भयं भीः। मूल्यं निदानम्। माल्यं स्रक्। आश्चर्यमद्भुतम्। तूर्यं वाद्यसमुदायः। अव्ययं चादि। जन्यं रणः। सैन्यं सेना। सा[Folio. 65 b]न्नाय्यं हविः। (पा? वा)र्यं मानभाण्डम्। अळिकं ललाटम्। लास्यं कैशिकीवृत्तं नृत्तम्। सस्यं यवाद्यङ्कुरः॥

अपत्यसत्योदरकाल्यकुल्य-
प्रालेयवीर्यारहव्यकव्यम्।
भाष्याज्यधिष्ण्या[104]र्मुकशुष्मवाक्य-
धान्यांसशल्यं वलयोत्तरीयम्॥ ५९॥

एते नपुंसके। इदमपत्यं सुतः[105]। सत्यं ऋतम्। उदरं जठरम्। काल्यं प्रातः। कुल्यमस्थि। प्रालेयं तुषारः। वी[Folio 66 a]र्यं बलं शुक्रं च। अररं रणः। हव्यमन्नं देवविधौ। कव्यं पितृविधानमन्नमेव। भाष्यं व्याख्यानविशेषः। आज्यं घृतम्। धिष्ण्यं गृहम्, नक्षत्रं च, अग्निस्थानं च। अर्मुकं[106] गजबन्धनम्। शुष्मं[107] बलम्। वाक्यं आख्यातकारकाव्ययम्। धान्यं व्रीह्यादि। अंसं स्कन्धः। शल्यं [108]मेहान्तर्गतं शस्त्रम्। वलयं दन्तादिघटितं कङ्कणम्, समूहश्च। उत्तरीयं परिधा-[Folio. 66 b]नम्॥

---

103 'गद्यं वृत्तबन्धः। पद्यं पदबन्धः' ग.

104 'ष्ण्यान्दुक' क. श.

106 'अन्दुकं' श.

107 'शुष्कं' क.

108 'ल्य देहा' ग.

द्रव्यव्यळीकोडुपकुड्यनाट्य-
केयूरकान्तारमलात[109]हर्म्यम् ।
श्मशानसोपानकुसुम्भपण्य-
मालानकालेयकमद्यमध्यम् ॥ ६० ॥

एते नपुंसके । इदं द्रव्यं पृथिव्यादि । व्यळीकं मनोविघातकः । उडुपं तृणादिबन्धः, प्लवश्च । चन्द्रवाचिनोऽस्य पुंस्त्वम् । कुड्यं गृहभित्तिः । नाट्यं नृत्तम् । केयूरमङ्गदम् । कान्तारं सत्रम्, काननमित्यर्थः । अलातं[110] उल्मुकम् । हर्म्यं वेश्म [Folio. 67 a] । श्मशानं पितृवनम् । सोपानमधिरोहणं प्रासादादेः । कुसुम्भ[महारज]तम् । पण्यम् ··· । आळानं हस्तिबन्धनस्तम्भः । कालेयकं जावकम्, रक्तचन्दनमित्यर्थान्तरम् । मद्यं माध्वीकादि । मध्यं अन्तरम्, अन्तः ॥

ऐडू[111]कशालूकवलीकनाक-
छत्राककिञ्जल्क[112]कशाकमल्कम् ।
वार्त्ताकमुर्वा[113]रुककन्दुकं कं
प्रकाण्डकौपीनमनूकदुग्धम् ॥ ६१ ॥

एते नपुंसके । इदं [114]ऐडूकं अन्तः सास्थिकं कुशम् । शालू-[Folio. 67 b]कं नीलनलिनम् । वलीकं पटलान्तः । नाकं खं स्वर्गं च ।

---

109 'लाकह' ख.

110 'लाकं' ख.

111 'मेडू' ग.

112 'कशेरुकाल्कम्' श.

113 'मुर्द्दारु' क.

114 'मेडू' ग.

स्वर्गवाचिनोऽस्य पुंस्त्वमपि । छत्राकं उद्भिन्नो द्रव्यविशेषः । किञ्जल्कं केसरम् । कशाकं पृष्ठास्थि, + + + श्च । वार्त्ताकं बहुबीजम् । [115]उर्वारुकं कर्कटी । कन्दुकं गण्डुकम् । [116]कं जलम् । प्रकाण्डं स्कन्धः, शस्त्रं च । कौपीनं गुदम् । अनूकं प्राग्जन्म । दुग्धं क्षीरम् ॥

आकूतपारत[Folio 68 a]निवीतनिमित्तपित्त-
वृत्तोपवीतनवनीतघृतामृतानि ।
द्वैतोक्तभक्तपलितव्रततालवृन्त-
वृन्ताद्भुतं मरकतं[117] पुततूस्तशुक्तम् ॥ ६२ ॥

एते नपुंसके । आकूतं इङ्गितम् । पारतं[118] रसविशेषः । [119]उपवीतं यज्ञसूत्रं कण्ठलम्बितं निमित्तहेतुः प्रोद्धृते दक्षिणे करे । एवं प्राचीनावीतं वा[Folio. 68 b]मकर उद्धृते । नवनीतं हैयङ्गवीनम् । घृतं सर्पिः । अमृतं पीयूषम् । द्वैतं नानात्वम् । उक्तम् एकाक्षरं छन्दः । अत्युक्तं द्व्यक्षरं छन्दः । भक्तं ओदनम् । पलितं निशिताः केशाः । व्रतं नियमः । तालवृन्तं व्यजनम् । वृन्तं पुष्पनिबन्धनम् । अद्भुतमाश्चर्यम् । मरकतं मणिविशेषः । पुतं स्फिक् । तूस्त[120] जरद्वस्त्रखण्डम् । शुक्तं चुक्रम् ॥

प्रादेशान्तं[121] त्रपुसज[122]वसा[Folio. 69 a]लीक-
शिल्पानि[123] तल्पं द्वन्द्वं[124] द्वारं
कुसुमकुलिशं पापरूपं [125]सपुष्पम् ।

---

115 'उर्हारु' क.
116 कं जलम् इति नास्ति ।
117 'रतकं पु'
118 'रद' (?)
119 'उपवीतं यज्ञसूत्रमुद्धृतं दक्षिणे करे' है०.व्या. 'निवीतं' ख.
120 'स्तव' क. 'स्त वस्त्रबन्धनम्' ग.
121 'न्तत्र' क.
122 'सयव' श.
123 'ल्पाट्टत' ग.
124 'न्द्वद्वा' क.
125 'सुपु' क.

भ्राष्टं स्तेयं सगुदककुदं विष्टपं
बर्हनल्वं पार्श्वं पिञ्छं[126]
कटककवचन्यक्षमन्दाक्षमृक्षम् ॥ ६३ ॥

एते नपुंसके । इदं प्रादेशान्तं [127]प्रमाणविशेषः [अवसा]नं च । अन्तश्शब्दस्य पुंस्त्वे प्राप्ते नपुंसके वचनम् । त्रपुसं हरीतकविशेषः । जवसं[128] घासः । अलीकं [Folio. 69 b] मृषा । शिल्पं कारुकर्म । तल्पं शय्या, दाराश्च । द्वन्द्वं युग्मम् । कुसुमम् पुष्पम् । कुलिशं वज्रम् । रूपं चक्षुर्विषयः । शेषविषयाणां पुंस्त्वमुक्तम् । सपुष्पं सह पुष्पेण वर्तत इति सपुष्प कुसुमम् । भ्राष्टमम्बरीषः (?) । स्तेयं चौर्यम् । सगुदं गुदेन सह वर्तत इति सगुदम् । गुदं पायुः । ककुदं [129]चिह्नम्, कूटं च । विष्टपं जगत् । बर्हं कलापः । नल्वं[130] शतप्रमाणम् । पार्श्वं शरीरैक[Folio. 70 a]देशः । पिञ्छं कलापः । कटकं करभूषणम्, स्कन्धावारः, पर्वतैकदेशश्च । कवचं वर्म । न्यक्षं कात्स्न्यम् । मन्दाक्षं प्रेम । ऋक्षं भम् ॥

मुकुट[131]शकटकिट्टं रिष्ट[132]दिष्टं ललाटं
बिसकिसलयसिध्मं काष्ठकुष्ठं सपृष्ठम् ।
रिणकरण[133]किरीटं तुत्थसिक्थो[134]क्थतीर्थं
शरणलवणनीडं तुण्डभाण्डाण्डकाण्डम् ॥ ६४ ॥

---

126 'पिछं' ख.

127 'प्रमाणविशेषावस्थानं शिखरं च' हे० ।

128 'वयसं घासः' ग.

129 'दं प्रधानं कू' क.

130 'हस्तशतं' क.

131 'मकुट' ख.

132 'रिष्टादि' श.

133 'णाकिर' श.

134 'क्थोत्थ' क.

एते नपुंसके । इदं मुकुटं किरीटम् । शकटं [Folio. 70 b] अनः । किट्टं अयःकल्कम् । रिष्टं[135] अश्रेयः । दिष्टं दैवम् । ललाटं अ(ळि ? ळ)-कम् । बिसं मृणाळम् । किसलयं नवाङ्कुरः । सिध्मं कुष्ठ[136]विकारः । काष्ठं दारु । कुष्ठं [137]रोगराजः, गन्धद्रव्य[138]विशेषः । सपृष्ठं पृष्ठेन सह वर्त्तत इति सपृष्ठम् । पृष्ठं पार्श्वम्, उपरि च । रिणं[धारण[139]ता]ग्राह्यं धनम् । करणं इन्द्रियम्, कारणविशेषः, कारकविशेषश्च । किरीटं मुकुटम् । तुत्थं चाक्षु[140]षद्रव्यविशेषः । सिक्थं मधूच्छिष्टम् । उक्थानि सा[Folio. 71 a]-मविशेषाः । तीर्थं मुनिनिषेवितं जलम्, आगमः[141], विमानं च । शरणं गृहम्, पारायणं च । लवणं रसविशेषः, सैन्धवादिद्रव्यविशेषः । नीडं खगालयः । तुण्डं चञ्चुः । भाण्डं भाजनम्, अश्वाभरणं च । अण्डं खगादिगर्भधारणं पेशीकोश उच्यते । काण्डं शरः, अवसरः, प्रकरणं च ॥

इत्यदन्ताः ।

कुङ्कुममांसखतक्रताम्भ-
श्छिद्रहिरण्यतमोऽ[Folio 71 b]ब्जमनोऽक्ष्णाम् ।
पर्णवनानन[142]लोहहलासृ[143]-
क्काञ्चिकचांपपुरां च तथाख्याः ॥ ६५ ॥

एषां कुङ्कुमादीनामाख्यानामान्यपि तद्वन्नपुंसके भवन्ति । कुङ्कुमस्य—इदं कुङ्कुमम्, काश्मीरम्, इत्यादि । मांसस्य—इदं मांसम्,

---

135 'रिट्ट' श.
136 'ष्ठविशेषः' ग.
137 'ष्ठं रोगः' ग.
138 'व्यम्' क. 'राजः द्रव्यविशेषश्च' ग.
139 'धारणाग्राह्यधनम्' ग.
140 'चक्षुष्यो द्र' श.
141 'मे वि' श.
142 'नानललो' क.
143 'लासक्का' क.

पललम्, पिशितम्, आमिषम्, क्रव्यम्, इत्यादि। खस्य—इदं खमाकाशम्, गगनम्, वियत्, विष्णुपदम्, इत्यादि। विहायसः पूर्वमुक्तमेव। तक्रस्य—इदं तक्रं मथितं व्यञ्जनम्। रतस्य—इदं सुरतम्, मै[Folio. 72 a]थुनम्, सङ्गम् इत्यादि। अम्भसः—इदं अम्भः, नीरम्, पानीयम्, सलिलम्, कम्, इत्यादि। जलशब्दोऽनेकार्थत्वादर्थवद्भवति। अप्शब्दः स्त्रियाम्। छिद्रस्य—इदं छिद्रम्, रन्ध्रम्, विवरम्, इत्यादि। हिरण्यस्य—इदं हिरण्यम्, धनम्, सुवर्णम्, रूप्यम्, जातरूपम्, इत्यादि। तमसः—इदं तमः, निशीथम्, तमिस्रम्, अन्धकारम्, ध्वान्तम्, इत्यादि। अब्जस्य—इदमब्जम्, पङ्केरुहम्, कुशेशयम्, पुण्डरीकम्, सरोजम्, पद्मम्, इत्यादि। मनसः—इदं मनः, [Folio. 72 b] चित्तम्, स्वान्तम्, मानसम्, इत्यादि। अक्ष्णः—इदमक्षि, नयनम्, लोचनम्, नेत्रम्, ईक्षणम्, इत्यादि। पर्णस्य—इदं पर्णम्, पलाशम्, दलम्, इत्यादि। वनस्य—इदं वनम्, काननम्, अरण्यम्, इत्यादि। आननस्य—इदं आननम्, वदनम्, लपनम्, मुखम्, वक्त्रम्, आस्यम्, इत्यादि। लोहस्य—इदं पारशवम्, तीक्ष्णम्, ताम्रम्, सीसम्, इत्यादि। हलस्य—इदं हलम् लाङ्गलम्। सीरशब्दः पुंस्युक्तः। असृजः—लोहितम्, रुधि[Folio. 73 a]-रम्, आस्रम्, आत्मजम्, क्षतजम्, इत्यादि। काञ्चिकस्य—इदं काञ्चिकम्, सौवीरम्, आरस्तलम्, तुषोदकम्, धान्याम्लम्, इत्यादि। चापस्य—इदं चापम्, कोदण्डम्, कार्मुकम्, इत्यादि। पुरः—इदं पुरम्, पत्तनम्, दुर्गम्, कोट्यमित्यादि। साक्षात् पूरशब्दः स्त्रियामुक्तः। चशब्दात् पापस्यानुक्तानि दुरितदुष्कृत[144]पातकादीनि, मञ्जीरस्याङ्गदस्य च नामानि नपुंसके[145] नोक्तानीति चशब्दा[146]त्तेषु [Folio. 73 b] भवन्ति ॥

---

144 'ष्कृतादी' श. 'ष्कृतपापादीनि' ग. 146 'ब्दात्तस्मिन् भ' क.

145 'क उक्तानि' श.

श्मश्रवश्रुयातुत्रपुजत्रु[147]दारु-
कशेरु[148]कुस्तुम्बुरुतुम्बुरूणि ।
ताल्वालु जीवातु च वास्तुवस्तु-
मस्तूनि मध्व[149]सृजतूनि जानु ॥ ६६ ॥

एते नपुंसके । इदं श्मश्रु व्यञ्जनम् । अश्रु बाष्पः । यातु रक्षः । त्रपु लोहविशेषः । जत्रु सन्धिः कक्षयोः । दारु काष्ठम् । कशेरु[150] तृणविशेषः । कुस्तुम्बुरु धान्यकम् । ओषधावेष पुंसीत्येके । तुम्बुरु जम्बीरिका । तालु [Folio. 74 a] काकुदम् । आलु शाकविशेषः । जीवातु जीवनम्, अन्नम्, औषधं च । वास्तु गृहभूः । वस्तु पदार्थः । मस्तु दधिस्रुतिः[151] । मधु[152] माक्षिकम् । अस्य मासर्तुवाचिनः पुंस्त्वमुक्तम्[153] । अ(स्रु ? श्रु) बाष्पः । जतु लाक्षानिर्यासः । जातु अष्ठीवन् (?) । चशब्दस्यानुक्तसमुच्चयार्थत्वात् अन्येऽप्युकारान्ता नपुंसके । इदं तितउ,[154] शिग्रु शोभाञ्जनम्, शलालु गन्धद्रव्यम् ॥

इत्युदन्ताः ॥

श्लेष्मो[Folio. 74 b]ष्मतक्षपक्षोक्ष[155]-
पूषाश्मग्रावमज्जतः ।

---

147 'जत्तृदा' क.

148 'रुकुशेरु' क.

149 'ध्वसृग्ज' क.

150 'रुस्तृण' क.

151 'धिस्रुतिः' क. 'धिमन्थः' ग.

152 'धु मार्द्वीकम्' ग.

153 'पुंस्युक्तम्' क.

154 तितउशब्दश्चालनीपर्यायः । अस्य पुस्त्वमपि केचिदिच्छन्ति ।

155 'तक्षयक्ष्मोक्ष' ग.

नान्तोऽन्यो द्व्यज्युवात्मार्व-
पाप्ममूर्धाध्वराजतः ॥ ६७ ॥

एते नपुंसके। श्लेष्मादिभ्यो योऽन्यो नान्तो नकारान्तो [156]द्व्यच् द्विस्वरः स सर्वो नपुंसको[157] भवति। तद्यथा-इदं लोम, नाम, व्योम, साम, चर्म, वर्म, धर्म, शर्म, प्रेम इत्येवमादयः। अहन्शब्दोऽपि नान्तः "अहन्" (पा० सू०. ८-२-६८) इति रेफान्तता[158]मापद्यते। श्ले[Folio. 75 a]-ष्मादयस्तु पुंस्येव। अयं श्लेष्मा कफः। ऊष्मा औष्ण्यम्, समृद्धिश्च। तक्षा कारुः। पक्ष्मा[159] रोमराजि.। उक्षा वृषः। पूषा रविः। अश्मा पाषाणः, ग्रावा, खनिश्च। मज्जा अस्थिसारः। अस्य स्त्रीत्वमपीच्छन्त्येके। युवा तरुणः। आत्मा द्विविधः-भूतात्मा परमात्मा चेति। अर्वा हयः, कुत्सितश्च। पाप्मा पापम्। मूर्धा शिरः। अध्वा मार्गः। राजा नृपः। राजमज्जादीनां वचनं शब्दार्थ[Folio. 75 b](कता ? के) तद्दर्शनात् (?) ॥

पृषज्जगदुदश्विच्च[160]
पुरीतच्च[161] यकृच्छकृत्।
स नपुंसकमित्यादि (पा० सू०. २-४-१५-२५, ३०)
प्रोक्तं पाणिनिनैव च ॥ ६८ ॥

एते नपुंसके। पृषद् बिन्दुः। जगत् स्थावरजङ्गमो लोकः। उदश्वित् तक्रम्। तक्रार्थानां नपुंसकत्वेऽपि सिद्धं पुनर्वचनमसन्देहार्थम्। पुरीतत्[16

156 'न्तो द्व्यल् द्व्यच्' क.
157 'के भ' क.
158 'ताप' कँ.
159 'यक्ष्मा रो' श.
160 'श्विन्ति पु' श.
161 'तं च' क.
162 'तमान्त्र' क.

आन्त्रम्। यकृत् काळमांसम्। शकृद्विष्ठा। एवमादिशब्दा नपुंसके। "स नपुंसकम्" [Folio 76 a] इत्यादीनि प्रोक्तं कथितं भगवता पाणिनिनैव। तच्चेहावबोद्धव्यम्। चशब्दात् भासश्च (?)। स नपुंसकम्—"यस्यायमेकवद्भावो विहितः स नपुंसकलिङ्गो भवतीति" (का० वृ०. ५-४-१७)। [जपादिभ्यः कारमं] द्विगुः द्वन्द्वश्च, द्विगुरेकवचनम्, द्वन्द्वश्चेति [त्रिलिङ्गम्] पञ्चगवम्, पञ्चरात्रम्, चतुर्युगम् इत्यादि समाहारद्विगुरेव च ॥

पाणि[Folio. 77 b]पादं शिरोग्रीवं
हस्त्यश्वं दंशमक्कुणम्।
पुत्रपौत्रं श्वचण्डालं
भ्रातृभार्यं तृणोपलम् ॥ ६९ ॥

कुशकाशं व्रीहियवं
द्वन्द्वश्चेत्येवमादिकम् (पा० सू०. २-४-२)।
अधिस्त्र्यधिकुमारीदं
पारेगङ्गं खलेयवम्[163] ॥ ७० ॥

एवमाद्यव्ययीभावः (पा० सू०. २-४-१८)
शेषोऽनुक्तोऽत्र दृश्यते।
अन्यस्यार्थे[164] पदस्यैष[165]
वर्तमानोऽभिधेयवत् ॥ ७१ ॥

---

163 "तिष्ठद्गुप्रभृतीनि च" (पा०. सू०. २-१-१७) इति सिध्यति।

164 "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (पा.० सू०. २-४-२६) इत्यस्य प्रपञ्चनमिदम्।

165 'पदस्येव' ग.

प्राक्पदार्थप्रधान[166]स्त्व-
लिङ्गोऽयं स्यादतोऽन्य[Folio. 76 b]था ॥ ७१ ॥

एषोऽव्ययीभावसमासोऽन्यस्य पदस्यार्थे वर्त्तमानोऽभिधेयवद्भवति । अभ्यङ्गा गावः । प्रत्यङ्गा गावः । अतोऽन्यथायं समासः पूर्वपदार्थ-प्रधानाच्चेद्भवति तदा लिङ्गं नपुंसकमित्यर्थः । इदं उपकुम्भम्, अनु-गीर्णम् इत्यादि ॥

स्त्री[Folio. 77 a]सभं[167] शलभच्छाय-
मिति[168] तत्पुरुषोऽप्यनञ्[169] ।
अकर्मधारयस्तस्मि-
न्नपथं[170] तु नपुंसकम् ॥ ७२ ॥

नञ्कर्मधारयवर्जितस्तत्पुरुषो नपुंसके । इदं स्त्रीसभम्, इदं शलभ-च्छायम् । "सभा राजामनुष्यपूर्वा" (पा० सू०. २-४-२३) इति नपुंसकत्वम् ॥

इति [171]भट्टभरद्वाजसूनोः पृथिवीश्वरस्य कृतौ [172]हर्षवर्द्धनकृतलिङ्गानु-शासनटीकायां [173]नपुंसकलिङ्गप्रकरणम्[174] ॥

---

166 'नं तु अलिङ्ग स्या' क. 'नस्तु अलिङ्गं स्या' ख.

167 " अशाला च " (पा० सू०. २-४-२४) इत्यनेन क्लीबता भवति । स्त्रीसङ्घात इत्यर्थः ।

168 "विभाषा सेना०" (पा० सू०. २-४-२५)इत्यादिना पक्षे क्लीबता ।

169 "तत्पुरुषोऽनञ् कर्मधारयः" (पा० सू०. २—४—१९) इत्यधिकारः ।

170 "अपथ नपुंसकम्" (पा० सू०. २-४-३०) इतीदं तत्पुरुष इत्येव । अन्यत्र तु—अपथो देश इति ।

171 'भट्टिमार' ग.

172 'कृतौ लि' ग.

173 'कायां सर्वार्थलक्षणाया' ग.

174 'णं समाप्तम् । श्रीसरस्वत्यै नमः । शुभमस्तु ।' ग.

## अथ मिश्रलिङ्गप्रकरणम् ॥

अथ क्रमप्राप्तमर्थवल्लिङ्गमाह—

सर्वेऽर्थवत्समासेऽमी यथायं सुकटिर्भटः[1] ।
सुकुचा सुकचा नारी सुक्षीरा गौर्नरोऽनृणः ॥ ७२ ॥

सर्वे स्त्री[Folio. 77 b]पुंनपुंसकलिङ्गाः शब्दाः प्रागुक्ताः समस्ताः सन्तः समासेऽर्थवदभिधेयवद्भवन्ति । अर्थेन तुल्यं वर्त्तत इत्यर्थवत् । यथा—अयं सुकटिर्भटः[2] । कटिशब्दः स्त्रियामुक्तः, समासे अन्यपदार्थत्वात् पुंसि । शोभना कटिर्यस्य सुकटिर्भटः । एवमन्येऽपि—कृतभ्रुकटिः,[3] सन्नद्धभ्रुकटिः,[4] अतनुः, सुशालः[5] पुरुषः, सुकटिः, सुतनु, सुशालं कुलम् इत्यादयः । सुकुचा सुकचा नारीति—शो[Folio. 78 a]भनौ कुचौ यस्याः सा सुकुचा नारी । शोभनाः कचाः यस्याः सा सुकचा नारी । कचकुचौ पुंस्युक्तौ समासेऽर्थवत्त्वात् स्त्रियां भवतः । एवं सर्वगुणा स्त्री, निर्गुणं कुलमित्यादि । सुक्षीरा गौः—शोभनं क्षीरं यस्याः सा सुक्षीरा गौः । अविद्यमानमृणं यस्य स नरोऽनृणः । यस्मादसमासेऽपि क्षीरर्णे नपुंसके कथिते, समासेऽर्थवत्त्वात् स्त्री[Folio. 78 b]पुंसयोर्भवतः । एवमियमयं वा कीलालपाः, अयमियं वा कुमारीदाः, शुभदाः इत्यादि । नपुंसकत्वे त्वेषां ह्रस्वेन भाव्यम् । इदं कीलालपम्, कुमारीदम्, शुभदम्, इत्यादि अकारान्ताः । अधुना इकारान्ताः क्रमेण उच्यन्ते-अयमियं वा ग्रामणीः, सेनानीः, श्रीः, वातप्रमीः । नपुंसके कृतह्रस्वः—इदं ग्राम[Folio. 79 a]णिकुलम्

---

1 'भंगः' ग.

2 'भंगः' ग.

3 'भ्रुकुटिः' क.

4 'भ्रुकुटिः' क.

5 'सुशापः पु' क.

इति । एवमन्येऽपीकारान्ताः । इदं सुतनु कुलम्, अयमियं वा दृढमन्युः, सुश्मश्रुर्युवा, ताम्रतालुः स्त्री इत्येवमादयोऽन्येऽप्युकारान्ताः । अयमियं वा खलपूः, यवलूः, नतभ्रूः इत्येवमादयः ऊकारान्ताः । नपुंसके तु कृतह्रस्वाः—इदं खलपुयवलुकुलम् इति । ऋकारान्तानाम् "नद्यृतश्च" (पा० सू०. ५—४—१५३) इति समासान्ते कपि कृते अकारान्तता स्प[Folio 79 b]ष्टैव । सुकर्तृकः, सुकर्तृका, सुकर्तृकमित्यादि । ऋतादयो न सन्ति तेषु । रैग्लौनौशब्दा ये सन्ति तेषु यथालक्षणम् । इत्यजन्ताः । अथातो हलन्ताः—ते च प्रायः क्विबन्ताः । अयमियमिदं वा अग्निचित् । एवं त्रिष्वप्येवमादयः सोमसुत्–सासुस्रगादयः अन्ये[6] भवन्ति । अमिति लुप्यते । "न विभक्तौ तुस्माः" (पा० सू०. १–३–४) इति तवर्गस्मान्ता-[Folio. 80 a]नां लुकि निषिद्धे ये सन्ति ते प्रदर्श्यन्ते—तत्र तवर्गाणां तकारान्ता दर्शिताः । अथ नकारान्ताः प्रदर्श्यन्ते—इयमयं वा सुधामा, सुनर्मा, सुपर्वा, सुधर्मा, सुशर्मेत्येवमादयः । अत्र स्त्रियां "ऋन्नेभ्यो ङीप्" (पा० सू०. ४–१–५) इति ङीपि प्राप्ते, "मनः" (पा० सू०. ४–१ - ११), "अनो बहुव्रीहेः" (पा० सू०. ४—१—१२) इति तस्मिन् प्रतिषिद्धे, "डाबुभाभ्यामन्यतरस्याम्" (पा० सू०. ४–१–१३) इति डाप्प्रत्ययः । स यत्रास्ति तत्राकारान्तत्वात् स्त्रीत्वम् । स इहोदाहृत [Folio. 80 b] इति । अत्रापि ह्रस्वान्ता नपुंसके—इदं सुनर्मेति । अथासन्ताः–इयमयं वा सुयशाः, सुशिराः इत्येवमादयः । अत्रापि ह्रस्वान्ता नपुंसके—इदं सुयश इति । मकारान्तौ किमिदंशब्दौ[7] सर्वनामत्वात् अर्थवदेवेति ॥

**शुच्याद्या असमासेऽपि शुचिः स्त्री ना शुचि द्वयम् ।**
**मृदुः स्त्री ना च [8]मृद्वङ्गं नानार्थाश्च शिवादयः ॥ ७४ ॥**

---

6 'अन्ये हलन्तामिति लुप्यते [न सन्ति?]' ग.

7 'ब्दौ त्वनन्तौ सर्व' ग. 'ब्दौ त्वस्नान्तौ सर्व' ख.

8 'ना यथाङ्गं च ना' क. ग.

अर्थवदित्यनुवर्तते । शुचिश[Folio. 81 a]ब्द आदिर्येषां ते शुच्याद्याः असमासेऽपि केवला अप्यर्थवद्भवन्ति । शुचिः स्त्रीत्यादि । यथा—शुचिः स्त्री, शुचिः ना, शुचि द्वयम्, मृदुः स्त्री, मृदुः ना, मृदु द्वयम्, अङ्गं च । अयमिदं वा पटुः, पट्वी स्त्री इत्येवमादयो बहवः । तथान्येऽप्येवं गुणे गुणिलिङ्गा भवन्ति इति बोद्धव्यम् । "वोतो गुणवचनात्" (पा० सू०. ४–१–४४) इति वा ङीप्प्रत्ययो यत्रास्ति तत्रेकारान्तत्वात् स्त्रीत्वम् । ङ्यभावादिहो[Folio. 81 b]दाहृतः । नानार्थाश्च शिवादयः—नानार्था बह्वर्थाः शिवादयः स्वार्थवत् भवन्ति । यथा—शिवो हरः, शिवं श्रेयः, शिवा गौरी ।

"शिवा क्रोष्ट्री शिवामलकी को द(कः? क्षः) (कं? किं) शिरोऽम्बु च[9] ।
भद्रा गौः शं च भद्रं स्यात् कुशलं कुशलो बुधः ॥"

एवं कृत्तद्धितान्तानां[10] लुः स्त्री लूर्नी च लु द्वयम् ।
नारी पौत्री पुमान् पौत्रो [11]भवेत्पौत्रं नपुंसकम् ॥७५॥

तथा[12] गुणाश्च सामान्यग्रहणा अभिधेयवत् ।
चित्रा कथेयं चित्रोऽर्थः चित्रं कर्म[13] तपस्विनाम् ॥

अर्थवत्सर्वनामानि[14] स पुमान् यो गुणी भवेत् ।
स[15] युवा तद्द्वयं सा स्त्री [16]तत्सुखं यदचिन्तनम् ॥

---

9 अक्षरमेकमधिकम् । 'शिवोऽम्बु ।' ग.

10 'तान्तं च भीरुः स्त्री ना च भीरु तत् । ' ग.

11 'त्रो नपुसकमिद यथा । ' क.

12 'गुणार्थे चित्रसामान्यगहनाः सर्वनाम च ।' क.

13 'र्म च धीमताम् ।' क.

14 'नि सर्वनामतया यथा । ' क.

15 'सा स्त्री परित्रता या स्यात् त' ग.

16 'स्त्री कः का[न्तित्र] वक्ष्यति' क.

स्यादीषदसमाप्तौ तु बहुप्रकृतिलिङ्गकः ।
यथा बहुगुडा द्राक्षा बहुद्राक्षं [17]बहुर्घृतः ॥ ७८ ॥

एवमादिस्पष्टार्थत्वाद्दर्शितं बोद्धव्यम् [Folio. 82 a] ॥

अथाविष्टलिङ्गशब्दाः ।

आविष्टलिङ्ग[18]शब्दास्तु[19] अलिङ्गवदमी यथा ।
प्रमाणं स्मृतयो वेदा [20]धनं वै दैवतं पतिः[21] ॥ ७९ ॥

अर्थवदिति निवृत्तम् । आविष्टं[22] स्थितं येषां ते आविष्टलिङ्गश[Folio. 82 b]ब्दाः । तुशब्दो विशेषद्योतनाय । नैवं ते अर्थवदिति । यथा [23]अलिङ्गवदाविष्टलिङ्गवत् द्रव्यवद्भवन्ति, स्वभावं न त्यजन्तीत्यर्थः । तान् दर्शयितुमाह—प्रमाणम्, स्मृतयः प्रमाणम् । वेदाः, धनं वेदाः । दैवतम्, पतिः दैवतम् । इत्यादीनि नपुंसकलिङ्गोदाहरणानि [Folio. 83 a] । एवमन्येऽपि[24] ॥

अथ पुन्नपुंसकलिङ्गाः ।

अथ (पुं)नपुंसकलिङ्गानि दर्शयितुमाह—

ब्रह्मान्धकारजठरव्रणचूर्णभूर्ज-
वज्रार्धशूलमलपल्वलपल्लवानि[25] ।

---

17 'द्राक्षा च रूषकः' ग.
18 'लिङ्गा श' श.
19 'ब्दा स्युरलि' श.
20 'दा द्यौर्वियद्दैव' श.
21 इतोऽनन्तर 'स्यादीषदसमाप्तौ' इत्यादिकारिका पठ्यते । क.
22 'आविष्टलिङ्गमीप्सितं एषा ते आविष्टलिङ्गशब्दाः' ग.
23 'अलिङ्गवत् अद्रव्यवत्' ग.
24 स्यादीषदसमाप्ताविल्यादिकारिका इतोऽनन्तरं पठ्यते । ग.
25 'पल्वलानि ।' ग.

अर्धर्चगोमययुगन्धरवेषकर्ष-

कार्षापणा निगडतो[26]रणवारपाणाः ।। ८० ।।

गाण्डीवताण्डव[27]तरण्डविटङ्कटङ्क-

प्रग्रीवशी[28]थुसरकाः समरः कबन्धः ।

द्वीपः पिनाककपटार्बुद[Folio 83 b]निष्क[29]मुष्क-

कासारयूषचषका वृषणामिषौ च ॥ ८१ ॥

वर्चस्कवेमवटमाषकगूथयूथ-

मञ्जीरवारकरकक्रकचाणुगेहाः[30] ।

कंसः शफो मुसलसानु च पद्मशङ्खा-

वब्जौ तु वासररणादि पुमन्त्यलिङ्गाः ॥ ८२ ॥

त्रिभिः पद्यैर्विशेषकोऽयम् । एते ब्रह्मादयः पुमन्त्यलिङ्गाः । ब्रह्मणो द्व्यजनन्तत्वान्नपुंसकता प्राप्ता । [31]एवं [Folio. 84 a] पुंस्येषां वचनं व्यवस्थितलिङ्गश्च ब्रह्मशब्दो धातरि पुंसि [32]अन्यत्र नपुंसके । अयं ब्रह्मा स्रष्टा । अन्यत्र इदं ब्रह्म वेदः, तपः, शाश्वतं ज्ञानं च । अन्धकारः अन्धकारं वा तमः । जठरः जठरं वा उदरम् । व्रणः व्रणं वा रुक् क्षतं वा । चूर्णः चूर्णं वा क्षोदः । भूर्जः भूर्जं वा तरुविशेषः । वज्रः वज्रं वा कुलिशम् । अर्धः अर्धं वा दलम् । शूलः शूलं

26 'तोरणपारणानि । ' ग.

27 'ताण्डवकरण्ड' ग.

28 'सीधु' श. 'थुरसकाः' क.

29 'ष्ककीलका' क, ग.

30 'णुरोहाः' क.

31 'पुंस्येव तेषां वचनम्' ग.

32 अन्यत्र नपुंसक इति नास्ति ख.

[Folio. 84 b] वा [वणिकं] रुजा च । मलः मलं वा पापं [33]रजश्च । पल्वलः पल्वलं वा अल्पजलविकारः । पल्लवः पल्लवं वा प्रवाळम् । अर्धर्चः अर्धर्चं वा ऋचोऽर्धम् । अर्धर्चः पुंसि विधानात् । गोमयः गोमयं वा गोशकृत् । युगन्धरः युगन्धरं वा कूबरः । वेषः वेषं वा आकल्पः । कर्षः कर्षं वा पलचतुर्थांशः । कार्षापणः कार्षापणं वा [Folio. 85 a] द्रव्यमात्राख्यः । निगळः निगळं वा अयोमयी दुष्टबन्धनशृङ्खला । तोरणः तोरणं वा देवराजादिद्वारि[34] समुच्छ्रितं दारु[35] । वारः वारं वा वासरः । पाणः पाणं वा कण्टकः । गाण्डीवः गाण्डीवं वा अर्जुनस्य धनुः । ताण्डवस्ताण्डवं वा शम्भुनृत्तम् । तरण्डः तरण्डं वा प्लवः । विटङ्कः विटङ्कं वा कपोतपाळिः । टङ्कः टङ्कं वा दृषद्दारणम् । प्रग्रीवः प्रग्री[Folio. 85 b]वं वा मत्तवारणः । शीधुः शीधु वा मद्यविशेषः । सरकः सरकं वा सर्पकृतविषविशेषः । समरः समरं वा रणम् । कबन्धः कबन्धं वा अशिरस्कः पुमान् । द्वीपः द्वीपं वा पुळिनम् । पिनाकः पिनाकं वा [36]शूलपाणेर्धनुः । कपटः कपटं वा व्याजः । अर्बुदः अर्बुदं वा मासकी[ल]कम् । निष्कः निष्कं वा सुवर्णविकारः । मुष्कः मुष्कं वा । कील इति वा पाठः । कीलः [Folio. 86 a] कीलं वा शङ्कुः । कासारः कासारं वा । यूषः यूषं वा मुद्गादिकृतं व्यञ्जनम् । चषकः चषकं वा । सरकः सरकं वा । वृषणः वृषणं वा कोशः । आमिषः आमिषं वा मांसम्, आलो[भनं] च । वर्चस्कः वर्चस्कं वा अवस्करः । वेमः वेम वा कुविन्दभाण्डम् । वटः वटं वा न्यग्रोधः [कुलक]भोज्यं च । माषकः माषकं वा [37]अष्टस्वर्णकृतकृष्णलाः । गूथः गूथं वा पुरीषम् [Folio. 86 b] । [38]यूथः यूथं वा सङ्घातः सङ्घातं वा । मञ्जीरः मञ्जीरं वा चरणालङ्कारः । वारः वारं वा क्रमो गणश्च । करकः करकं वा पानीयभाजनम् । क्रकचः क्रकचं वा करचक्रम् । अणु-

33 'पापं पङ्कश्च' ग.

34 'द्वारस' श.
हे०—बहिर्द्वार निर्यूहः ।

35 दारु इति नास्ति क.

36 'शूलम् । ' श.

37 'वा पञ्चकृष्णलाः' श.

38 शूर्पपदं न व्याख्यातम् ।

[धान्य]जातिः । अणु सूक्ष्मम् । गेहः गेहं वा गृहम् । कंसः कंसं वा मानविशेषः, लोहः, जातिश्च । शफः शफं वा गवादिखुरः । मुसलः मुसलं वा आयुधविशे[Folio. 87 a]षः धान्यखण्डनं च । सानुः सानु वा गिरेः समो भूभागः । चशब्दात् कञ्चुकः कञ्चुकं वा वारवाणम् । पद्म-शङ्खशब्दौ परिभाषालिङ्गौ दर्शयितुमाह—पद्मशङ्खावब्जौ जलोद्भवौ । तुशब्दो विशेषद्योतनाय । अब्जवाचकौ पद्मशङ्खशब्दौ तु नपुंसके नान्यः । यथा—अयं पद्मः पद्मं वा जलजः ।

"अन्तर्जलगताः पद्माः श्रोतुका[Folio. 87 b]मा इवोत्थिताः ।"
"पद्मानि काकैरिव खण्डितानि ।"

इति । शङ्खः शङ्खं वा कम्बुः । अब्जाविति किम् ? अयं पद्मः शङ्खश्च निधिः । वासरः वासरं वा दिनम् । रणः रणं वा समरः । आदि-शब्दोऽन्येषामपि परिग्रहाय । दिङ्मात्रमेव तदिहास्माभिर्दर्शितम् । शेषं लक्षणतोऽवधार्यम् ॥

अथ परिभाषालिङ्गाः ।

परिभाषालिङ्गान् दर्शयितुमाह—

**सत्त्वं प्राणिनि बह्व[Folio. 88 a]र्थे गृहं वर्णोऽक्षरे परम् ।**
**सैन्धवं लवणे भूतं पिशाचे स्वं धने तथा ॥ ८३॥**

सत्त्वं प्राणिनीति । सत्त्वशब्दः प्राणिनि पुन्नपुंसकलिङ्गः—अयं सत्त्वः इदं सत्त्वं वा प्राणी । अन्यत्र सत्त्वाख्यो गुणः[39] । गृहं बह्वर्थे बहुवचने—इमे गृहा दाराः, गृहाणि वा । बह्वर्थ इति किम् ? इदं गृहम्,

39 'गुणद्रव्यम् ।' ग.

नपुंसकमेव । वर्णोऽक्षरे परम्—वर्णः वर्णं वा [Folio. 88 b] अक्षरम् । अन्यत्र शुक्लो वर्णः । वर्णा ब्राह्मणादयः । वर्णोऽक्षर इति पुंस्त्वनिर्देशात् अक्षरादन्यत्र वर्णः । परमिति वचनात् कृच्छ्रं तपसि पुन्नपुंसकलिङ्गम् । कृच्छ्रः कृच्छ्रं वा तपः । अन्यत्र कृच्छ्रं दुःखं नपुंसक एव । सैन्धवः सैन्धवं वा लवणम् । अन्यत्र सैन्धवोऽश्व । भूतो भूतं वा पिशाचः । अन्यत्र भूतो जातः, भूतानि पृथिव्यादीनि । स्वः स्वं वा धनम् [Folio. 89 a] । अन्यत्र स्वा ज्ञातयः, तथा वचनात् ॥

पुंस्याम्राद्याः फले पुष्पे भेषजे तु नपुंसके ।
आम्रा नम्रा[40]स्तथा रम्याश्चन्दना देवदारवः ॥ ८४ ॥

सुरभ्याम्रं चन्दनं च देवदारूदरार्चि[41]जित् ।
खर्जूरं बृंहणं हृद्यं चण्पकं तिलकं तथा ॥ ८५ ॥

वृक्षेष्वाम्रादयः पुंसि बदर्याद्याः स्त्रियां मताः ।
फलपुष्पौषधाद्यर्थे तेषां ज्ञेयं नपुंसकम् ॥ ८६ ॥

आम्रादयः शब्दाः पुंनपुंसकलिङ्गा [Folio. 89 b] भवन्ति । तत्र विभागः—एते यदि वृक्षवाचका भवन्ति तदा पुंस्त्वम् । यद्येते फलादिवाचकाः स्युः तदा नपुंसकत्वम् । बदर्याद्याः स्त्रीलिङ्गा वृक्षवाचिनः, औषधादिष्वेव नपुंसकता । आदिग्रहणात् केतक्यामलकीप्रभृतयः । इति पुन्नपुंसकलिङ्गता दर्शिता ॥

इति पुन्नपुंसकलिङ्गप्रकरणम्

---

40 'म्रा य' क.    41 'रातिजि' ग.

अथ स्त्रीपुंसलिङ्गाः ।

इदानीं (पुं)स्त्रीलिङ्गान् दर्शयितुमाह—

आणीषुबाहुफणतूणमरीचिमुष्टि-
गोस्वातियोनितिथिपाटलिसिन्धुसाराः ।
गण्डूषकन्दरभुजाशनयः कुथश्च
पुंस्त्रीध्वजाः कृसरवेतससल्लकाद्याः ॥ ८७ ॥

एते पुंस्त्रीध्वजाः । यथा—अयमियं वा आणिः अक्षाग्रकीलः । अस्येकारान्तत्वात् स्त्रीत्वे प्राप्ते पुंस्यपि व[Folio. 90 a]चनम् । अयमियं वा इषुः शरः । अयमियं वा बाहुः भुजः । फणः फणा वा सर्पशिरोविकारः । तूणः तूणा वा इषुधिः । अयमियं वा मरीचिः रश्मिः रश्मिवाचिनोऽन्ये पुंस्युक्ताः । अस्योभयमित्येके । अयमियं वा मुष्टिः कराङ्गुलीनां सन्निवेशः, प्रमाणं च । अयं गौः अनड्वान्, इयं गौः [42]महिषी । गोशब्दस्य स्त्रीपुंसयोः स्वरूपभेदा[Folio. 90 b]दिह वचनमन्येषां च निदर्शनाय । एवमन्या प्राणिजातिः । यथा—अश्वा अश्वी, शुकः शुकी, श्वा शुनी, अहि-कपि-रुरु-[43]वीणु-करेणु-सिंहा-जादिकः । अयमियं वा स्वातिर्नक्षत्रविशेषः । अयमियं वा योनिरुत्पत्तिस्थानम् । अयमियं वा तिथिः प्रतिपदादिः । अयमियं वा पाटलिरोषधिः । अयमियं वा[44] सिन्धुः [Folio. 91 a] समुद्रः । अयं सारः, इयं सारी आपानभूमिः कटकश्च । अयं गण्डूषः, इयं गण्डूषा आस्यपूरणिका । अयं कन्दरः इयं कन्दरी । अयं भुजः, इयं भुजा बाहुः । अयमियं वा अशनिः ह्लादिनी । अयं कुथः इयं कुथा (व?प)र्णास्तरणम्, गजाश्वपृष्ठाच्छादनम् । अयं कृसरः इयं कृसरा तिल-तण्डुलमिश्रं भो[Folio. 91 b]जनम् । अयं वेतसः, इयं वेतसी वानीरजा ।

---

42 'माहेयी' श. (?)

43 'रुरुपीलुप्रभृतय. ।' श.

44 'य वा सरित् सिन्धुः' ख.

अयं सल्लकः, इयं सल्लकी सुगन्धतरुविशेषः । एवमाद्या अन्येऽपि— समिच्छिलालिक्किष्कवः सटातूलप्रभृतय एवमाद्याः सुबोधाः ॥

एवमेव रथी गन्त्री स्यन्दनस्तु रथो यथा ।
कृपाणोऽसिः कृपाणी तु क्षुरिकायां पटः पटी ॥ ८८ ॥

इति पुंस्त्रीलिङ्गाः [Folio. 92 a] ।

अथ स्त्रीनपुंसकलिङ्गाः ।

अथ स्त्रीनपुंसकलिङ्गान् दर्शयितुमाह—

स्त्रीनपुंसकयोरर्चिः पीठोडू मन्दिरार्गळे ।
मृणाळीकन्दळीस्थालीप्रणाळीयुगळादयः ॥ ८९ ॥

एते शब्दा स्त्रीनपुंसकयोर्भवन्ति । इयमिदं वा अर्चिः दीप्तिः । इसन्तत्वादस्य नपुंसकता प्राप्ता, वचनात् स्त्रीत्वमपि । इयं पीठी इदं पीठम् आसनविशेषः । इयमुडुः इदमुडु नक्षत्रम् । इयं मन्दिरा इदं म[Folio. 92 b]-न्दिरं गृहम् । मन्दिरा तत्र वारीरिति (?) । इयमर्गळा इदमर्गळं द्वारप्रतिबन्धः । इयं मृणाळी इद मृणाळं बिसम् । इयं कन्दळी इदं कन्दळं नवनाळं शाकादेः । इयं स्थाली उखा, इदं स्थालं भाजनविशेषः । इयं प्रणाळी इदं प्रणाळं वारिसरणद्रोणिः । इयं युगळी इदं युगळं युगम् । आदिशब्दस्य प्रकारवाचित्वादेवम्प्रकारा [ Folio. 93 a] अन्येऽपि—आस्थानी, [45]आक्रीडम् आक्रीडा, शस्त्रम् शस्त्री, द्वयम् द्वयी, त्रयं त्रयी, नगरम् नगरी, पुरम् पुरी, इत्येवमादयोऽन्ये । ईकारान्तत्वात् स्त्रीत्वम् । नोक्ता लक्ष्यावधारणीया इत्यर्थः ॥

इति स्त्रीनपुंसकलिङ्गाः ।

---

[45] 'क्रोडं क्रोडा' क.

अथ त्रिलिङ्गाः ।

त्रिलिङ्गान् दर्शयन्नाह—

त्रिषु[46] वाटी पुटी पेटी पात्री नखरमण्डलौ ।
तटशृङ्खलवल्लूरमठप्रतिसराढ[47]काः ॥ ९० ॥

विषाणीदाडिमीता[48]डीभल्लातकविभीतकाः ।
कुवला[49]मलकीमुस्तास्त्रिलिङ्गा एवमादयः[Folio. 93 b] ॥

दारस्तल्पो भगोऽङ्कोऽस्त्री मेढ्रश्चापत्यमात्मजः ।
पोटा द्विलिङ्गमित्यादि प्रोक्तं शब्दार्थभेदतः ॥ ९२ ॥

मेढ्राद्यङ्केऽपि गोधादिपिण्डी स्त्रीलिङ्गभाग्ध्वनिः ।
स्त्रीपुंसभेदः पक्षादावेवं ज्ञेयो मनीषिभिः[50] ॥ ९३ ॥

एवमादयः शब्दाः त्रिलिङ्गेषु भवन्ति । इयं तटी, अयं तटः, इदं तटं नद्याः कूलम् । शृङ्खला, शृङ्खलः, शृङ्खलम् अयोमयो रज्जुः । वल्लरी, वल्लूरः, वल्लूरं सूकरमांसं शुष्कं वा । मठी मठः मठं धर्मगृहम् । प्रतिसरा प्रतिसरः प्रतिसरं मङ्गलसूत्रम् । आढकी आढकः आढकं मानभाण्डविशेषः । विषाणी [Folio. 94 a] विषाणः विषाणम् गवादिशृङ्गम् + + + + वेवं ज्ञेयो मनीषिभिः । एष पूर्वोक्तो लिङ्ग-नियमः क्वचिदन्यथापि लक्ष्ये दृश्यते । यथा—दारशब्दः पुंस्त्वे बहुत्व

46 इदमर्धं नास्ति क.

47 'राटकाः' क.

48 'मीनाडी' क.

49 अस्यार्धस्य स्थाने "बहुत्वादिह यन्नोक्तं तल्लक्ष्य लक्ष्यतोऽपरम्" इति पठितम् । श.

50 इद कारिकाद्वयं (९२, ९३)ग्रन्थ-समाप्तिश्लोकात् पूर्वं पठितम् । श.

एवोक्तः, क्वचित् दारा इति बहुवचनं पुलिङ्गैकवचने च 'गुणवति दारे' इत्यादौ दृश्यते । तल्पशब्दः पुंस्यपि दृश्यते । भगशब्दस्य सामग्र्यादिवाचकस्य तथा मेढ्रशब्दस्याङ्गपर्यायस्य नपुंसके । क्वचिदङ्गवाचिनोर्द्वयो- [Folio. 94 b]रपि पुंस्त्वं दृश्यते । तथा मेढ्राद्यङ्केऽपि पुंव्यञ्जनादिचिह्नेऽपि स्त्रीलिङ्गभाग्भवति । भगाङ्का स्त्री, मेढ्राङ्कः पुमानिति । तथापत्यात्मजशब्दयोर्द्वयोरपि स्त्रीपुंवाचकत्वात् क्वचिदुभयम् । क्वचित् पोटशब्दोऽप्युभयलिङ्गः । एवमादि सुधीभिरवधार्यम् ।

इति त्रिलिङ्गकाः ।

अथालिङ्गकाः ।

संख्या ष्णान्ता युष्मदस्मत्कत्यव्ययमलिङ्गकम् ।
षट्[51] काः षट्[52] के च षट्[53] कानि पञ्च तास्ते च तान्यपि ॥

त्वं स्त्री त्वं ना कुलं त्वं चाहं स्त्री नाहमहं कुलम् ।
कति स्त्रियः कति नराः कति तानि च वा हि दिक्[54] ॥

ष्णान्ताः षकारनकारान्ताः संख्याः युष्मदस्मत् कति अव्य- [Folio. 95 a]यं एते शब्दा अलिङ्गा अविशिष्टलिङ्गाः । यथा—षट् काः, षट् के, षट् कानि । एवं पञ्च स्त्रियः, पञ्च नराः, पञ्च कुलानि । एवं सप्ताष्टकादयः । युष्मदस्मदोः—त्वं द्वयम्, अहं जनता, अहं जनः, अहं वृन्दम् । कति स्त्रियः, कति नराः, कति कुलानि । उच्चैः स्त्री, उच्चैः पुमान्, उच्चैः कुलमित्यादि । किं स्त्रीपु[Folio. 95 b]मानिति ? अपत्यम् ।

---

51 'ताः' श.

52 'ते' श.

53 'तानि' श. 'कानि स्त्री ना त्वं द्वयं तथा । ' क.

54 इयं कारिका नास्ति क.

[अहं चेतोवृत्तिः जयः] । पञ्च काः के कान्यत्र, कति तास्ते च तानि । एष उदाहरणमन्येषामिति ॥

बहुत्वे[55] बल्बजा[56] लाजाः कश्मीराः सक्तवोऽसवः ।
दारा वासोदशा वर्षा आपः सुमनसः समाः ॥ ९६ ॥

एते बल्बजादयः शब्दा बहुत्वे बहुवचना भवन्ति । इमे बल्बजा स्त्रीजातयः । इमे लाजाः [Folio. 96 a] प्राक् प्रख्याताः । इमे कश्मीराः देशाः । पुल्लिङ्गशब्दमध्यमपाठात् देशो विदेशोऽपि पुल्लिङ्गो ज्ञेयः । सक्तवः, असवः, दाराः, वासोदशाः । वर्षादयः स्त्रियाम्—इमा वर्षाः प्रावृट्; इमा आपः सलिलम्; इमाः सुमनसः पुष्पाणि; इमाः समा वर्षाणि । एषां नित्यबहुत्वम् । दारशब्दश्चन्द्रस्याबहुत्वे स्त्रियां च ॥

व्याडेः शङ्करचन्द्र[Folio 96 b]योर्वररुचेर्विद्यानिधेः पाणिनेः
सूक्ताँल्लिङ्गविधीन् विचार्य सुगमं [57]श्रीवर्धनस्यात्मजः ।
श्रव्यं[58] व्यापि च हर्षवर्धे[59]न इदं स्पष्टीकृतप्रत्ययं
लिङ्गानामनुशासनं रचितवान[60]त्यर्थसंसिद्धये ॥ ९७ ॥

सूक्तान् लिङ्गविधीन् विचार्य पर्यालोच्य[61] सारं संगृह्य तेभ्यः सुगमं श्रव्यं व्यापि च लिङ्गानुशासनं रचितवान् । [62]अन्यच्च स्पष्टीकृतप्रत्ययं घञन्ता[Folio. 97 a]दयः प्रत्यया आविष्टाः संहिताः संश्लिष्टाः पृथक्कृत्य

55 'बह्वर्थे ब' श. क.
56 'जा भावाः' क.
57 'मश्री' क.
58 'श्राव्यं' क.
59 'नमिदं' ग.
60 'नथ्यर्थ' श.
61 'लोड्य' श.
62 अन्यच्चेत्यादि प्रदर्शितामित्यन्तं नास्ति । ग.

स्पष्टीकृता यत्र । तत्तत्प्रत्ययानां सोदाहरणानां दर्शनात् पृथक्स्पष्टतास्य । तत्र हि पुरुषा स्वल्पाश्रिता मन्दधियः ष्यङ् अङ् नञ् ईय इत्येवमादिषु । किमर्थमिदं तात्पर्यं चेदित्यत आह—अत्यर्थसंसिद्धये । एतत्परिज्ञानार्थि-[Folio 97 b]नां तेषामयमर्थः कथमनायासेन सिध्यतामिति लिङ्गं प्रदर्शितम् ॥

इति भट्ट[63]भरद्वाजसूनोः [64]पृथिवीश्वरस्य कृतौ
हर्षवर्धनकृतलिङ्गानुशासनटीकायां
सर्व[65]लक्षणायां [66]मिश्रलिङ्गप्रकरणं
समाप्तम् ।

लिङ्गानुशासनटीका समाप्ता ॥ शिवमस्तु [Folio. 98 a]

रूपेणाप्रतिमः श्रुतेन नसमो वीर्येण पाण्डोः सुतः
काव्ये चातिमनोरमः सुकृतिनामासन्नकल्पद्रुमः ।
जातः सम्प्रति हर्षवर्धन इति प्रख्यातकीर्तिः सतां
तेनेयं रचिता मनोरमकृतिर्लिङ्गान्विशिष्टीकृता ॥

---

63 'द्दीप्तस्वामिसू' श.

64 'नोः बलवागीश्व' श.

65 'क्षणयोर्मिश्र' क.

66 'यां त्रिलि' श.

## INDEX OF THE WORDS OF THE LINGĀNUŚĀSANA TEXT.

य



र

## REGISTER OF CITATIONS

१. यदुक्तम्—"निषादः काकलीसञ्ज्ञे त्रिःश्रुत्युत्कर्षणाद् भवेत्" ।

२. यदुक्तम्—"दीधितिमेकां मुक्त्वा रश्म्यभिधानं पुंस्येव" ।

३. "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
हलन्तादपि टापं वा यथा वाचा दिशा क्षुधा" ॥

४. "अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः" ।

५. "पद्मानि काकैरिव खण्डितानि" ।

६. "कुटीरादिवचने स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते" ।

७. तथाच वररुचिः—
"ज्ञेयो.................................." ।

८. "तानि धर्माणि प्रथमान्यासन्" ।

## REGISTER OF PROPER—NAMES

१. विश्वरूप
२. पृथिवीश्वर
३. व्याडि
४. वररुचि
५. चन्द्रगोमि
६. भागुरि
७. चन्द्र
८. प्राग्वंश
९. अम्बरीष
१०. पाणिनि
११. शङ्कर
१२. विद्यानिधि
१३. श्रीवर्धनात्मज
१४. हर्षवर्धन
१५. दक्षिणापथ

# पाणिनीयं लिङ्गानुशासनम्

**लिङ्गम् ॥ १ ॥**

**स्त्री ॥ २ ॥**

अधिकारसूत्रे एते ।

**ऋकारान्ता मातृदुहितृस्वसृपोतृननान्दरः ॥ ३ ॥**

ऋकारान्ता एते पञ्चैव स्त्रीलिङ्गाः । स्वस्रादिपञ्चकस्यैव ङीब्निषेधेन कर्त्रीत्यादेर्ङीपा ईकारान्तत्वात् । तिसृचतस्रोस्तु स्त्रियामादेशतया विधानेऽपि प्रकृत्योस्त्रिचतुरोर्ऋदन्तत्वाभावात् ।

**अन्यूप्रत्ययान्तो धातुः ॥ ४ ॥**

अनिप्रत्ययान्त ऊप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । अवनिः । चमूः । प्रत्ययग्रहणं किम्? देवयतेः क्विप् । द्यूः । विशेष्यलिङ्गः ।

**अशनिभरण्यरणयः पुंसि च ॥ ५ ॥**

इयमयं वा अशनिः ।

**मिन्यन्तः ॥ ६ ॥**

मिप्रत्ययान्तो निप्रत्ययान्तश्च धातुः स्त्रियां स्यात् । भूमिः । ग्लानिः ।

**वह्निवृष्ण्यग्नयः पुंसि ॥ ७ ॥**

पूर्वस्यापवादः ।

**श्रोणियोन्यूर्मयः पुंसि च ॥ ८ ॥**

इयमयं वा श्रोणिः ।

**क्तिन्नन्तः ॥ ९ ॥**

स्पष्टम् । कृतिरित्यादि ।

**ईकारान्तश्च ॥ १० ॥**

ईप्रत्ययान्तः स्त्री स्यात् । लक्ष्मीः ।

**ऊङाबन्तश्च ॥ ११ ॥**

कुरूः । विद्या ।

**य्वन्तमेकाक्षरम् ॥ १२ ॥**

श्रीः । भूः । एकाक्षरं किम्? पृथुश्रीः ।

**विंशत्यादिरा नवतेः ॥ १३ ॥**

इयं विंशतिः । त्रिंशत् । चत्वारिंशत् । पञ्चाशत् । षष्टिः । सप्ततिः । अशीतिः । नवतिः ।

**दुन्दुभिरक्षेषु ॥ १४ ॥**

इयं दुन्दुभिः । अक्षेषु किम्? अयं दुन्दुभिर्वाद्यविशेषोऽसुरो वेत्यर्थः ।

**नाभिरक्षत्रिये ॥ १५ ॥**

इयं नाभिः ।

**उभावप्यन्यत्र पुंसि ॥ १६ ॥**

दुन्दुभिर्नाभिश्चोक्तविषयादन्यत्र पुंसि स्तः । नाभिः क्षत्रियः । कथ तर्हि,

"समुल्लसत्पङ्कजपत्रकोमलैरुपाहितश्रीण्युपनीविनाभिभिः ।"

इति भारविः? उच्यते—दृढभक्तिरित्यादाविव कोमलैरिति सामान्ये नपुंसकं बोध्यम् । वस्तुतस्तु "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति भाष्यात्पुंस्त्वमपीह साधु । अत एव,

"नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान् ।
द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे ॥"

इति मेदिनी । रभसोऽप्याह—

"मुख्यराट् क्षत्रिये नाभिः पुंसि प्राण्यङ्गके द्वयोः ।
चक्रमध्ये प्रधाने च स्त्रिया कस्तूरिकामदे ॥"

इति । एवमेवंविधेऽन्यत्रापि बोध्यम् ।

**तलन्तः ॥ १७ ॥**

अयं स्त्रियां स्यात् । शुक्लस्य भावः शुक्लता । ब्राह्मणस्य कर्म ब्राह्मणता । ग्रामस्य समूहो ग्रामता । देव एव देवता ।

**भूमिविद्युत्सरिल्लतावनिताभिधानानि ॥ १८ ॥**

भूमिर्भूः। विद्युत्सौदामिनी। सरिन्निम्नगा। लता वल्ली। वनिता योषित्।

**यादो नपुंसकम् ॥ १९ ॥**

यादश्शब्दः सरिद्वाचकोऽपि क्लीबं स्यात्।

**भाःस्रुक्स्रग्दिगुष्णिगुपानहः ॥ २० ॥**

एते स्त्रियां स्युः। इयं भा इत्यादि।

**स्थूणोर्णे नपुंसके च ॥ ॥ २१ ॥**

एते स्त्रियां क्लीबे च स्तः। स्थूणा, स्थूणम्। ऊर्णा, ऊर्णम्। तत्र स्थूणा काष्ठमयी द्विकर्णिका। ऊर्णा तु मेषादिलोम।

**गृहशशाभ्यां क्लीबे ॥ २२ ॥**

नियमार्थमिदम्। गृहशशपूर्वे स्थूणोर्णे यथासंख्यं नपुसके स्तः। गृहस्थूणम्। "शशोर्णं शशलोमनि" इत्यमरः।

**प्रावृड्विप्रुड्रुड्विट्त्विष ॥ २३ ॥**

एते स्त्रियां स्युः।

**दर्विविदिवेदिखनिशान्यश्रिवेशिकृष्योषधिकट्यङ्गुलयः ॥ २४ ॥**

एते स्त्रियां स्युः। पक्षे ङीप्। दर्वी, दर्विः इत्यादि।

**तिथिनाडिरुचिवीचिनालिधूलिकिकिकेलिछविरात्र्यादयः ॥ २५ ॥**

एते प्राग्वत्। इयं तिथिरित्यादि। अमरस्त्वाह—"तिथयो द्वयोः" इति। तथाच भारविः—"तस्य भुवि बहुतिथास्तिथयः" इति। स्त्रीत्वे हि बहुतिथ्य इति स्यात्। श्रीहर्षश्च—"निखिलान्निशि पौर्णिमातिथीन्" इति।

**शष्कुलिराजिकुट्यशनिवर्तिभ्रुकुटित्रुटिवलिपङ्क्तयः ॥ २६ ॥**

एतेऽपि स्त्रियां स्युः। इयं शष्कुलिः।

**प्रतिपदापद्विपत्सम्पच्छरत्संसत्परिषदुषःसंविरक्षुत्पुन्मुत्समिधः ॥२७॥**

इयं प्रतिपदित्यादि। उषाः उच्छन्ती। उषाः प्रातरधिष्ठात्री देवता।

**आशीर्धूःपूर्गीर्द्वारः ॥ २८ ॥**

इयमाशीरित्यादि।

**अप्सुमनस्समासिकताकर्षाणां बहुत्वं च ॥ २९ ॥**

अबादीनां पञ्चानां स्त्रीत्वं स्याद् बहुत्वं च । आप, इमाः । स्त्रियः सुमनसः पुष्पम् । सुमना मालती जातिः । देववाची तु पुंस्येव । सुपर्वाणः सुमनसः । बहुत्वं प्रायिकम् । "एका च सिकता तैलदाने असमर्था" इति अर्थवत्सूत्रे (पा०. १. २. ४५) भाष्यप्रयोगात् । समासमां विजायत इत्यत्र समाया समायामिति भाष्याच्च । "विभाषा घ्राधेट्" (पा०. २. ४. ७८) इति सूत्रे "आघ्रासातां सुमनसौ" इति वृत्तिव्याख्यायां हरदत्तोऽप्येवम् ।

**स्रक्त्वग्ज्योग्वाग्यवागूनौस्फिजः ॥ ३० ॥**

इयं स्रक्, त्वक्, ज्योक्, वाक्, यवागूः, नौः, स्फिक् ।

**तृटिसीमासम्बध्याः ॥ ३१ ॥**

इयं तृटिः । सीमा । सम्बध्या ।

**चुल्लिवेणिखार्यश्च ॥ ३२ ॥**

स्पष्टम् ।

**ताराधाराज्योत्स्नादयश्च ॥ ३३ ॥**

**शलाका स्त्रियां नित्यम् ॥ ३४ ॥**

नित्यग्रहणमन्येषां क्वचिद्व्यभिचारं ज्ञापयति ।

**इति स्त्र्यधिकारः**

## अथ पुल्लिङ्गाधिकारः

**पुमान् ॥ १ ॥**

अधिकारोऽयम् ।

**घञबन्तः ॥ २ ॥**

पाकः । त्यागः । करः । गरः । भावार्थ एवेदम् । नंपुसकत्व-

विशिष्टे भावे क्त्ल्युड्भ्यां स्त्रीत्वाविशिष्टे तु क्तिन्नादिभिर्बाधेन परिशेषात्। कर्मादौ तु घञाद्यन्तमपि विशेष्यलिङ्गम्। तथाच भाष्यम्—"सम्बन्धमनुवर्तिष्यते" इति।

**घाजन्तश्च ॥ ३ ॥**

विस्तरः। गोचरः। चयः। जयः इत्यादि।

**भयलिङ्गभगपदानि नंपुसके ॥ ४ ॥**

एतानि नपुंसके स्युः। भयम्। लिङ्गम्। भगम्। पदम्।

**नङन्तः ॥ ५ ॥**

नङ्प्रत्ययान्तः पुंसि स्यात्। यज्ञः। यत्नः।

**याच्ञा स्त्रियाम् ॥ ६ ॥**

पूर्वस्यापवादः।

**क्यन्तो घुः ॥ ७ ॥**

किप्रत्ययान्तो घुः पुंसि स्यात्। आधिः, निधिः, उदधिः। क्यन्तः किम्? दानम्। घुः किम्? जज्ञिर्बीजम्।

**इषुधिः स्त्री च ॥ ८ ॥**

इषुधिशब्दः स्त्रियां पुंसि च। पूर्वस्यापवादः।

**देवासुरात्मस्वर्गगिरिसमुद्रनखकेशदन्तस्तनभुजकण्ठखड्गशरपङ्काभिधानानि ॥ ९ ॥**

एतानि पुंसि स्युः। देवाः सुराः, असुरा दैत्याः, आत्मा क्षेत्रज्ञः, स्वर्गो नाकः, गिरिः पर्वतः, समुद्रोऽब्धिः, नखः कररुहः, केशः शिरोरुहः, दन्तो दशनः, स्तनः कुचः, भुजो दोः, कण्ठो गलः, खड्गः करवालः, शरो मार्गणः, पङ्कः कर्दम इत्यादि।

**त्रिविष्टपत्रिभुवने नपुंसके ॥ १० ॥**

स्पष्टम्। तृतीयं विष्टपं त्रिविष्टपम्। स्वर्गाभिधानतया पुंस्त्वे प्राप्ते अयमारम्भः।

**द्यौः स्त्रियाम् ॥ ११ ॥**

द्योदिवोस्तन्त्रेणोपादानमिदम् ।

**इषुबाहू स्त्रियां च ॥ १२ ॥**

चात्पुंसि ।

**बाणकाण्डौ नपुंसके च ॥ १३ ॥**

चात्पुंसि । त्रिविष्टपेत्यादिचतुस्सूत्री देवासुरेत्यस्यापवादः ।

**नान्तः ॥ १४ ॥**

अयं पुंसि । राजा, तक्षा । न च चर्मवर्मादिष्वतिव्याप्तिः "मन्-द्व्यच्को कर्तरि" इति नपुंसकप्रकरणे वक्ष्यमाणत्वात् ।

**क्रतुपुरुषकपोलगुल्फमेघाभिधानानि ॥ १५ ॥**

क्रतुरध्वरः । पुरुषो नरः । कपोलो गण्डः । गुल्फः प्रपदः । मेघो नीरदः ।

**अभ्रं नपुंसकम् ॥ १६ ॥**

पूर्वस्यापवादः ।

**उकारान्तः ॥ १७ ॥**

अयं पुंसि स्यात् । प्रभुः, इक्षुः । "हनुर्हट्टविलासिन्यां नृत्यारम्भे गदे स्त्रियाम् । द्वयोः कपोलावयवे" इति मेदिनी । "करेणुरिभ्यां स्त्री नेभे" इत्यमरः । एवंजातीयकविशेषवचनानाक्रान्तस्तु प्रकृतसूत्रस्य विषयः । उक्तं च—

"लिङ्गशेषविधिर्व्यापी विशेषैर्यद्यबाधितः ।"

इति । एवमन्यत्रापि ।

**धेनुरज्जुकुहूसरयुतनुरेणुप्रियङ्गवः स्त्रियाम् ॥ १८ ॥**

**समासे रज्जुः पुंसि च ॥ १९ ॥**

कर्कटरज्ज्वा, कर्कटरज्जुना ।

**श्मश्रुजानुवसुस्वादश्रुजतुत्रपुतालूनि नपुंसके ॥ २० ॥**

**वसु चार्थवाचि ॥ २१ ॥**

अर्थवाचीति किम् ? वसुर्मयूखाग्निधनाधिपेषु ।

**मद्गुमधुसीधुशीधुसानुकमण्डलूनि नपुंसके च ॥ २२ ॥**

चात्पुंसि ।- अयं मद्गुः । इदं मद्गु ।

**रुत्वन्तः ॥ २३ ॥**

मेरुः, सेतुः ।

**दारुकसेरुजतुवस्तुमस्तूनि नपुंसके ॥ २४ ॥**

रुत्वन्त इति पुंस्त्वस्यापवादः । इदं दारु ।

**सक्तुर्नपुंसके च ॥ २५ ॥**

चात्पुंसि । सक्तुः, सक्तु ।

**प्राग्रश्मेरकारान्तः ॥ २६ ॥**

रश्मिदिवसाभिधानमिति वक्ष्यति । प्रागेतस्मादकारान्त इत्यधिक्रियते ।

**कोपधः ॥ २७ ॥**

कोपधोऽकारान्तः पुंसि स्यात् । स्तबकः । कल्कः ।

**चिबुकशालूकप्रातिपदिकांशुकोल्मुकानि नपुंसके ॥ २८ ॥**

पूर्वसूत्रापवादः ।

**कण्टकानीकसरकमोदकचषकमस्तकपुस्तकतडाकनिष्कशुष्कवर्चस्कपिनाकभाण्डकपिण्डककटकशण्डकपिटकतालकफलकपुलाकानि नपुंसके च ॥**

चात्पुंसि । अयं कण्टकः, इदं कण्टकमित्यादि ।

**टोपधः ॥ ३० ॥**

टोपधोऽकारान्तः पुंसि स्यात् । घटः, पटः ।

**किरीटमुकुटललाटवटवीटशृङ्गाटकराटलोष्टानि नपुंसके ॥ ३१ ॥**

किरीटमित्यादि ।

**कुटकूटकपटकवाटकर्पटनटनिकटकीटकटानि नपुंसके च ॥ ३२ ॥**

चात्पुंसि । कुटः, कुटमित्यादि ।

**णोपधः ॥ ३३ ॥**

णोपधोऽकारान्तः पुंसि स्यात् । गुणः । गणः । पाषाणः ।

ऋणलवणपर्णतोरणरणोष्णानि नपुंसके ॥ ३४ ॥

पूर्वसूत्रापवादः ।

कार्षापणस्वर्णसुवर्णव्रणचरणवृषणविषाणचूर्णतृणानि नपुंसके च ॥

चात्पुंसि ।

थोपधः ॥ ३६ ॥

रथः ।

काष्ठपृष्ठसिक्थोक्थानि नपुंसके ॥ ३७ ॥

इदं काष्ठमित्यादि ।

काष्ठा दिगर्था स्त्रियाम् ॥ ३८ ॥

इमाः काष्ठाः ।

तीर्थप्रोथयूथगाथानि नपुंसके च ॥ ३९ ॥

चात्पुंसि । अयं तीर्थः, इदं तीर्थम् ।

नोपधः ॥ ४० ॥

अदन्तः पुसि । इनः । फेनः ।

जघनाजिनतुहिनकाननवनवृजिनविपिनवेतनशासनसोपानमिथुनश्म-शानरत्ननिम्नचिह्नानि नपुंसके ॥ ४१ ॥

पूर्वस्यापवादः ।

मानयानाभिधाननलिनपुलिनोद्यानशयनासनस्थानचन्दनालानसमा-नभवनवसनसम्भावनविभावनविमानानि नपुंसके च ॥ ४२ ॥

चात्पुंसि । अय मानः, इदं मानम् ।

पोपधः ॥ ४३ ॥

अदन्तः पुंसि । यूपः । दीपः ।

पापरूपोडुपतल्पशिल्पपुष्पशष्पसमीपान्तरीपाणि नपुंसके ॥ ४४ ॥

इदं पापमित्यादि ।

शूर्पकुतपकुणपद्वीपविटपानि नपुंसके च ॥ ४५ ॥

अयं शूर्पः, इदं शूर्पमित्यादि ।

भोपधः ॥ ४६ ॥

स्तम्भः । कुम्भः ।

तलभं नपुंसकम् ॥ ४७ ॥

पूर्वस्यापवादः ।

जृम्भं नपुंसके च ॥ ४८ ॥

जृम्भम्, जृम्भः ।

मोपधः ॥ ४९ ॥

सोमः । भीमः ।

रुक्मसिध्मयुध्मेध्मगुल्माध्यात्मकुङ्कुमानि नपुंसके ॥ ५० ॥

इदं रुक्ममित्यादि ।

संग्रामदाडिमकुसुमाश्रमक्षेमक्षौमहोमोद्दामानि नपुंसके च ॥ ५१ ॥

चात्पुंसि । अयं संग्रामः, इदं संग्रामम् ।

योपधः ॥ ५२ ॥

समयः । हयः ।

किसलयहृदयेन्द्रियोत्तरीयाणि नपुंसके ॥ ५३ ॥

स्पष्टम् ।

गोमयकषायमलयान्वयाव्ययानि नपुंसके च ॥ ५४ ॥

गोमयः, गोमयम् ।

रोपधः ॥ ५५ ॥

क्षुरः । अङ्कुरः ।

द्वाराग्रस्फारतक्रवक्रवप्रक्षिप्रक्षुद्रनारतीरदूरकृच्छ्ररन्ध्राश्रश्वभ्रभीरगभीर-क्रूरविचित्रकेयूरकेदारोदराजस्रशरीरकन्दरमन्दारपञ्जराजरजठराजिरवैरचामर-पुष्करगह्वरकुहरकुटीरकुलीरचत्वरकाश्मीरनीराम्बरशिशिरतन्त्रयन्त्रक्षत्रक्षेत्र—

मित्रकलत्रचित्रमूत्रसूत्रवक्त्रनेत्रगोत्राङ्गुलित्रभलत्रशस्त्रशास्त्रवस्त्रपत्रपात्रछत्राणि नपुंसके ॥ ५६ ॥

इदं द्वारमित्यादि ।

शुक्रमदेवतायाम् ॥ ५७ ॥

इदं शुक्रं रेतः ।

चक्रवज्रान्धकारसारावारपारक्षीरतोमरशृङ्गारभृङ्गारमन्दारोशीरतिमिर-शिशिराणि नपुंसके च ॥ ५८ ॥

चात्पुंसि । चक्रः, चक्रमित्यादि ।

षोपधः ॥ ५९ ॥

वृषः । वृक्षः ।

शिरीषर्जीषाम्बरीषपीयूषपुरीषकिल्बिषकल्माषाणि नपुंसके ॥ ६० ॥

यूषकरीषमिषविषवर्षाणि नपुंसके च ॥ ६१ ॥

चात्पुंसि । अयं यूषः, इदं यूषमित्यादि ।

सोपधः ॥ ६२ ॥

वत्सः । वायसः । महानसः ।

पनसबिसबुससाहसानि नपुंसके ॥ ६३ ॥

चमसांसरसनिर्यासोपवासकार्पासवासमासकासकांसमांसानि नपुंसके च ॥ ६४ ॥

इदं चमसम्, अयं चमस इत्यादि ।

कंसं चाप्राणिनि ॥ ६५ ॥

कंसोऽस्त्री पानभाजनम् । प्राणिनि तु कंसो नाम कश्चिद्राजा ।

रश्मिदिवसाभिधानानि ॥ ६६ ॥

एतानि पुंसि स्युः । रश्मिर्मयूखः । दिवसो घस्रः ।

दीधितिः स्त्रियाम् ॥ ६७ ॥

पूर्वस्यापवादः ।

**दिनाह्नी नपुंसके ॥ ६८ ॥**

अयमप्यपवादः ।

**मानाभिधानानि ॥ ६९ ॥**

एतानि पुंसि स्युः । कुडवः । प्रस्थः ।

**द्रोणाढकौ नपुंसके च ॥ ७० ॥**

इदं द्रोणम्, अयं द्रोणः ।

**खारीमानिके स्त्रियाम् ॥ ७१ ॥**

इयं खारी, इयं मानिका ।

**दाराक्षतलाजासूनां बहुत्वं च ॥ ७२ ॥**

इमे दाराः ।

**नाड्यपजनोपपदानि व्रणाङ्गपदानि ॥ ७३ ॥**

यथासंख्यं नाड्याद्युपपदानि व्रणादीनि पुंसि स्युः । अयं नाडीव्रणः अपाङ्गः । जनपदः । व्रणादीनामुभयलिङ्गत्वेऽपि क्लीबत्वनिवृत्त्यर्थं सूत्रम् ।

**मरुद्गरुत्तरदृत्विजाः ॥ ७४ ॥**

अयं मरुत् ।

**ऋषिराशिदृतिग्रन्थिक्रिमिध्वनिबलिकौलिमौलिरविकविकपिमुनयः ॥**

एते पुंसि स्युः । अयमृषिः ।

**ध्वजगजमुञ्जपुञ्जाः ॥ ७६ ॥**

एते पुंसि ।

**हस्तकुन्तान्तव्रातवातदूतधूर्तसूतचूतमुहूर्ताः ॥ ७७ ॥**

एते पुंसि । अमरस्तु मुहूर्तोऽस्त्रियामित्याह ।

**षण्डमण्डकरण्डभरण्डवरण्डतुण्डगण्डमुण्डपाषण्डशिखण्डाः ॥ ७८ ॥**

अयं षण्डः ।

**वंशांशपुरोडाशाः ॥ ७९ ॥**

अयं वंशः । पुरो दाश्यते पुरोडाशः । कर्मणि घञ् । भवव्याख्यानयोः

प्रकरणे पौरोडाशपुरोडाशात् ष्ठन्निति, विकारप्रकरणे व्रीहेः पुरोडाश इति च निपातनात्प्रकृतसूत्र एव निपातनाद्वा दस्य डत्वम् । "पुरोडाशभुजामिष्टम्" इति माघः ।

**ह्रदकन्दकुन्दबुद्बुदशब्दाः ॥ ८० ॥**

अयं ह्रदः ।

**अर्घपथिमथ्यृभुक्षिस्तम्बनितम्बपूगाः ॥ ८१ ॥**

अयमर्घः ।

**पल्लवपल्वलकफरेफकटाहनिर्व्यूहमठमणितरङ्गतुरङ्गगन्धमृदङ्गसङ्ग-समुद्रपुङ्खाः ॥ ८२ ॥**

अयं पल्लव इत्यादि ।

**सारथ्यतिथिकुक्षिबस्तिपाण्यञ्जलयः ॥ ८३ ॥**

एते पुंसि । अयं सारथिः ।

## इति पुल्लिङ्गाधिकारः

## अथ नपुंसकाधिकारः

**नपुंसकम् ॥ १ ॥**

अधिकारोऽयम् ।

**भावे ल्युडन्तः ॥ २ ॥**

हसनम् । भावे किम् ? पचनोऽग्निः । इध्मप्रव्रश्चनः कुठारः ।

**निष्ठा च ॥ ३ ॥**

भावे या निष्ठा तदन्तं क्लीबं स्यात् । हसितम् । गीतम् ।

**त्वष्यञौ तद्धितौ ॥ ४ ॥**

शुक्लत्वम् , शौक्ल्यम् । ष्यञः षित्वसामर्थ्यात्पक्षे स्त्रीत्वम् । चातुर्यम् , चातुरी । सामग्र्यम् , सामग्री । औचित्यम् , औचिती ।

**कर्मणि च ब्राह्मणादिगुणवचनेभ्यः ॥ ५ ॥**

ब्राह्मणस्य कर्म ब्राह्मण्यम् ।

**यद्यढ्‍य्यगञण्वुञ्छाश्च भावकर्मणि ॥ ६ ॥**

एतदन्तानि क्लीबानि । स्तेनाद्यन्नलोपश्च । स्तेयम् । सख्युर्यः । सख्यम् । कपिज्ञात्योर्ढक् । कापेयम् । पत्यन्तपुरोहितादिभ्यो यक् । आधिपत्यम् । प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् । औष्ट्रम् । हायनान्तयुवादिभ्योऽण् । द्वैहायनम् । द्वन्द्वमनोज्ञादिभ्यो वुञ् । पितापुत्रकम् । होत्राभ्यश्छः । अच्छावाकीयम् । अव्ययीभावः । अधिस्त्रि ।

**द्वन्द्वैकत्वम् ॥ ७ ॥**

पाणिपादम् ।

**अभाषायां हेमन्तशिशिरावहोरात्रे च ॥ ८ ॥**

स्पष्टम् ।

**अनञ्कर्मधारयस्तत्पुरुषः ॥ ९ ॥**

अधिकारोऽयम् ।

**अनल्पे छाया ॥ १० ॥**

शरच्छायम् ।

**राजामनुष्यपूर्वा सभा ॥ ११ ॥**

इनसभमित्यादि ।

**सुरासेनाच्छायाशालानिशास्त्रियां च ॥ १२ ॥**

**परवत् ॥ १३ ॥**

अन्यस्तत्पुरुषः परवल्लिङ्गः स्यात् । रात्राह्नाहाः पुंसि ।

**अपथपुण्याहे नपुंसके ॥ १४ ॥**

**संख्यापूर्वा रात्रिः ॥ १५ ॥**

त्रिरात्रम् । संख्यापूर्वेति किम् ? सर्वरात्रः ।

**द्विगुः स्त्रियां च ॥ १६ ॥**

व्यवस्थया । पञ्चमूली । त्रिभुवनम् ।

**इसुसन्तः ॥ १७ ॥**

हविः । धनुः ।

**अर्चिः स्त्रियां च ॥ १८ ॥**

इसन्तत्वेऽपि अर्चिः स्त्रियां नपुंसके च स्यात् । इयमिदं वा अर्चिः ।

**छदिः स्त्रियामेव ॥ १९ ॥**

इयं छदिः । छद्यतेऽनेनेति छदेश्चुरादिण्यन्तादर्चिशुचीत्यादिना इस् । इस्मन्नित्यादिना ह्रस्वः । "पटलं छदिः" इत्यमरः । तत्र पटलसाहचर्याच्छदिषः क्लीबतां वदन्तोऽमरव्याख्यातार उपेक्ष्याः ।

**मुखनयनलोहवनमांसरुधिरकार्मुकविवरजलहलधनान्नाभिधानानि ॥**

एतेषामभिधायकानि क्लीबे स्युः । मुखमाननम् । नयनं लोचनम् । लोहं कालम् । वनं गहनम् । मांसमामिषम् । रुधिरं रक्तम् । कार्मुकं शरासनम् । विवरं बिलम् । जलं वारि । हलं लाङ्गलम् । धनं द्रविणम् । अन्नमशनम् । अस्यापवादानाह त्रिसूत्र्या—

**सीरार्थौदनाः पुंसि ॥ २१ ॥**

**वक्त्रनेत्रारण्यगाण्डीवानि पुंसि च ॥ २२ ॥**

वक्त्रो वक्त्रम् । नेत्रो नेत्रम् । अरण्योऽरण्यम् । गाण्डीवो गाण्डीवम् ।

**अटवी स्त्रियाम् ॥ २३ ॥**

**लोपधः ॥ २४ ॥**

कुलम् । कूलम् । स्थलम् ।

**तूलोपलतालकुसूलतरलकम्बलदेवलवृषलाः पुंसि ॥ २५ ॥**

अयं तूलः ।

**शीलमूलमङ्गलसालकमलतलमुसलकुण्डलपललमृणालवालनिगलपलालबिडालखिलशूलाः पुंसि च ॥ २६ ॥**

चात् क्लीबे । शीलम्, शीलः इत्यादि ।

**शतादिः संख्या ॥ २७ ॥**

शतम् । सहस्रम् । शतादिरिति किम्? एको द्वौ बहवः । संख्येति किम्? शतश्रृङ्गो नाम पर्वतः ।

**शतायुतप्रयुताः पुंसि च ॥ २८ ॥**

अयं शतः, इदं शतमित्यादि ।

**लक्षा कोटिः स्त्रियाम् ॥ २९ ॥**

इयं लक्षा । इयं कोटिः । "वा लक्षा नियुतं च तत्" इत्यमरात् । क्लीबेऽपि लक्षम् ।

**शङ्कुः पुंसि ॥ ३० ॥**

सहस्रः कश्चित् । अयं सहस्रः, इदं सहस्रम् ।

**मन्द्व्यच्कोऽकर्तरि ॥ ३१ ॥**

मन्प्रत्ययान्तो द्व्यच्कः क्लीबः स्यान्न तु कर्तरि । वर्म । चर्म । द्व्यच्कः किम्? अणिमा । महिमा । अकर्तरि किम्? ददाति इति दामा ।

**ब्रह्मन् पुंसि च ॥ ३२ ॥**

अयं ब्रह्मा, इदं ब्रह्म ।

**नामरोमणी नपुंसके ॥ ३३ ॥**

मन्द्व्यच्क इत्यस्यायं प्रपञ्चः ।

**असन्तो द्व्यच्कः ॥ ३४ ॥**

यशः । मनः । तपः । द्व्यच्कः किम्? चन्द्रमाः ।

**अप्सराः स्त्रियाम् ॥ ३५ ॥**

एता अप्सरसः । प्रायेणायं बहुवचनान्तः ।

**त्रान्तः ॥ ३६ ॥**

पत्रम् । छत्रम् ।

**यात्रामात्राभस्त्रादंष्ट्रावरत्राः स्त्रियामेव ॥ ३७ ॥**

**भृत्रामित्रछात्रपुत्रमन्त्रवृत्रमेढ्रोष्ट्राः पुंसि ॥ ३८ ॥**

अयं भृत्रः । न मित्रममित्रः । "तस्य मित्राण्यमित्रास्ते" इति माघः । "स्यातामममित्रौ मित्रे च" इति च । यत्तु "द्विषोऽमित्रे" (पा०. ३. २. १३१)

इति सूत्रे हरदत्तेनोक्तम् । "अमेर्द्विषत्०" (उ० सू० ६२३) इत्यौणादिक इत्रच् । अमेरमित्रम् । "मित्रस्य व्यथयेत्" इत्यादौ मध्योदात्तस्तु चिन्त्यः । नञ्समासेऽप्येवम् । परवल्लिङ्गतापि स्यादिति तु तत्र दोषान्तरमिति तत्प्रकृतसूत्रापर्यालोचनमूलकम् । स्वरदोषोद्भावनमपि नञो जरमरमित्रमृता इति षाष्ठसूत्रास्मरणमूलकमिति दिक् ।

**पत्रपात्रपवित्रसूत्रछत्राः पुंसि च ॥ ३९ ॥**

**बलकुसुमशुल्बपत्तनरणाभिधानानि ॥ ४० ॥**

बलं वीर्यम् ।

**पद्मकमलोत्पलानि पुंसि च ॥ ४१ ॥**

पद्मादयः शब्दाः कुसुमाभिधायित्वेऽपि द्विलिङ्गाः स्युः । अमरोऽप्याह —"वा पुंसि पद्मं नलिनम्" इति । एवं चार्धर्चादिसूत्रे (पा० २. ४ । ३१) तु "जलजे पद्मं नपुंसकमेव" इति वृत्तिग्रन्थो मतान्तरेण नेयः ।

**आहवसंग्रामौ पुंसि ॥ ४२ ॥**

**आजिः स्त्रियामेव ॥ ४३ ॥**

**फलजातिः ॥ ४४ ॥**

फलजातिवाची शब्दो नपुंसकं स्यात् । आमलकम् । आम्रम् ।

**वृक्षजातिः स्त्रियामेव ॥ ४५ ॥**

क्वचिदेवेदम् । हरीतकी ।

**वियज्जगत्सकृत्शकन्पृषत्शकृद्यदुदश्वितः ॥ ४६ ॥**

एते क्लीबाः स्युः ।

**नवनीतावतानानृतामृतनिमित्तवित्तचित्तपित्तव्रतरजतवृत्तपलितानि ॥**

**श्राद्धकुलिशदैवपीठकुण्डाङ्काङ्गदधिसक्थ्यक्ष्यास्यास्पदाकाशकण्वबीजानि ॥ ४८ ॥**

एतानि क्लीबे स्युः ।

**दैवं पुंसि च ॥ ४९ ॥**

दैवम्, दैवः ।

धान्याज्यसस्यरूप्यपण्यवर्ण्यधृष्यहव्यकव्यकाव्यसत्यापत्यमूल्यशिक्यकुड्यमद्यहर्म्यतूर्यसैन्यानि ॥ ५० ॥

इदं धान्यमित्यादि ।

द्वन्द्वबर्हदुःखबडिशपिच्छबिम्बकुटुम्बकवचवरशरवृन्दारकाणि ॥

अक्षमिन्द्रिये ॥ ५२ ॥

इन्द्रिये किम्? रथाङ्गादौ मा भूत् ।

इति नपुंसकाधिकारः

## अथ स्त्रीपुंसाधिकारः

स्त्रीपुंसयोः ॥ १ ॥

अधिकारोऽयम् ।

गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः ॥ २ ॥

इयमयं वा गौः ।

मृत्युसीधुकर्कन्धुकिष्कुकण्डुरेणवः ॥ ३ ॥

इयमयं वा मृत्युः ।

गुणवचनमुकारान्तं नपुंसकं च ॥ ४ ॥

त्रिलिङ्गमित्यर्थः । पटु, पटुः, पट्वी ।

अपत्यार्थस्ताद्धिते ॥ ५ ॥

औपगवः, औपगवी ।

इति स्त्रीपुंसाधिकारः

## अथ पुन्नपुंसकाधिकारः

पुंनपुंसकयोः ॥ १ ॥

अधिकारोऽयम् ।

घृतभूतमुस्तक्ष्वेलितैरावतपुस्तकबुस्तलोहिताः ॥ २ ॥
अयं घृतः, इदं घृतम् ।

शृङ्गार्घनिदाघोद्यमशल्यदृढाः ॥ ३ ॥
अयं शृङ्गः, इदं शृङ्गम् ।

व्रजकुञ्जकुथकूर्चप्रस्थदर्पार्भार्धर्चदर्भपुच्छाः ॥ ४ ॥
अयं व्रजः, इदं व्रजम् ।

कबन्धौषधायुधान्ताः ॥ ५ ॥
स्पष्टम् ।

दण्डमण्डखण्डशवसैन्धवपार्श्वाकाशकुशकाशाङ्कुशकुलिशाः ॥ ६ ॥
एते पुंनपुंसकयोः स्युः । "कुशो रामसुते दर्भे योक्त्रे द्वीपे कुशं जले" इति विश्वः । शलाकावाची तु स्त्रियाम् । तथा च जानपदादिसूत्रेण (पा०· ४. १. ४२) अयोविकारे ङीषि कुशी । दारुणि तु टाप् । "कुशा वानस्पत्याः स्थ ता मा पात" इति श्रुतिः । "अतः कृकमि" इति सूत्रे (पा०. ८. ३. ४६) कुशाकर्णीष्विति प्रयोगश्च । व्याससूत्रे च—"हानौ तूपायनशब्दे शेषत्वात्कुशाच्छन्दः" इति । तत्र शारीरकभाष्येऽप्येवम् । एवं च श्रुतिसूत्रभाष्याणामेकवाक्यत्वे स्थिते आच्छन्द इत्याङ्प्रश्लेषादिपरो भामतीग्रन्थः प्रौढिवादमात्रपर इति विभावनीयं बहुश्रुतैः ।

गृहमेहदेहपट्टपटहाष्टापदाम्बुदककुदाश्च ॥ ७ ॥

इति पुंनपुंसकाधिकारः

अविशिष्टलिङ्गम् ॥ १ ॥
अव्ययं कतियुष्मदः ॥ २ ॥
ष्णान्ता संख्या ॥ ३ ॥
शिष्टा परवत् । एकः पुरुषः, एका स्त्री, एकं कुलम् ।

गुणवचनं च ॥ ४ ॥
शुक्लः पटः, शुक्ला पटी, शुक्लं वस्त्रम् ।

कृत्याश्च ॥ ५ ॥

करणाधिकरणयोर्ल्युट् च ॥ ६ ॥

सर्वादीनि सर्वनामानि ॥ ७ ॥

स्पष्टार्थेयं त्रिसूत्री ।

पाणिनीयं लिङ्गानुशासनं वृत्तिसहितं समाप्तम्

# अथ शाकटायनकृतं लिङ्गानुशासनम्

## नपुंसकलिङ्गप्रकरणम्

नब्व्यच्सन्तमवेधोजरस्तथा मन्त्रकर्त्तरि त्रान्तम् ।
त्वाद्या त्वाद्बहुलं घ्यप्क्तानखभावोऽव्ययीभावः ॥ १ ॥

द्वन्द्वैकत्वं संख्याव्ययपूर्वपदः पथोऽथ तत्पुरुषो- ।
ऽनञ्कर्मधारयो बहुलेभ्यश्छाया सभा शाला ॥ २ ॥

राजार्थराक्षसादेरराज्ञ आदावुपक्रमोपज्ञम् ।
संज्ञायां कन्थोशीनरेषु सेना सुरा छाया ॥ ३ ॥

शाला निशा च वोर्णास्थूणे शशगृहपरे सुदिनपुण्यात् ।
एकाच्चाहो रात्रः संख्यायाः किल युगमयाने ॥ ४ ॥

फलभेदनयनजलवनधनान्नहललोहविवरमांसधनु- ।
र्जलकुसुमशुल्बपत्तनरणमुखदलरुधिरनामानि ॥ ५ ॥

दध्यस्थिसक्थिजत्रुश्मश्रवस्रास्त्रश्रुवस्तुमस्तुजतु ।
त्रपुतालुजानुदारुकशेरुस्वादूनि वस्वर्थे ॥ ६ ॥

चिबुकांशुकशुल्कोल्मुकशालूकप्रातिपदिकमकुटतटम् ।
पिटवटतिरीटलोष्टकरोटललाटानि शृङ्गाटम् ॥ ७ ॥

तुण्डाण्डभाण्डकुण्डं पर्णसृणं लवणतोरणोष्णरणम् ।
पीठोक्थरिक्थकाष्ठं पृष्ठाजिनजघनदिनतुहिनम् ॥ ८ ॥

सोपानभुवनकाननमिथुनलवनगगनवेतनं वृजिनम् ।
कठिनश्मशानशासनरत्नविपिननिम्नचिह्नानि ॥ ९ ॥

तलभं त्रिविष्टपं भं रूपोडुपशिल्पतल्पपुष्पाणि ।
पापसमीपपरीपान्तरीपयुग्मेध्मसिध्मानि ॥ १० ॥

गुल्माध्यात्मं कुङ्कुमहिमकिसलयहृदयमिन्द्रियं वलयम् ।
प्रालेयमुत्तरीयप्रान्तप्रत्यन्तराष्ट्राणि ॥ ११ ॥

द्वाराग्रवक्रतक्रस्फाराजिरचीरतीरकेयूरम् ।
क्षिप्रक्षुद्रश्वभ्रक्रूराम्बरनीरद्वाराणि ॥ १२ ॥

रन्ध्रं चीवरकेसरमुद्रान्तरजठरगह्वरकुटीर- ।
छिद्रककुन्दरपञ्जरमन्दिरचत्वरशरीराणि ॥ १३ ॥

वैराक्षरपुष्करचामराभ्रशिशिरशिबिरं तनौ शुक्रम् ।
पनसांससाहसबिसं पीयूषपुरीषकल्माषम् ॥ १४ ॥

शीर्षं जोषं किल्बिषमिन्द्रियमक्षं पृषद्बसदुदश्वित् ।
वियता जगच्छकृद्यकृद्दलातपित्तं व्रतं वृत्तम् ॥ १५ ॥

नवनीतनिमित्तानृतरजतामृतपलितमरकतं वित्तम् ।
शवबडिशविश्वकुलिशाङ्गददैवगुदास्पदाकाशम् ॥ १६ ॥

द्वन्द्वसुखदुःखबर्हश्राद्धाङ्गशरावपार्श्वकिण्वानि ।
भयलिङ्गवर्षभगपदबिम्बकुटुम्बानि शफवृन्दम् ॥ १७ ॥

शिक्यं मद्यं धान्यं सत्यापत्याज्यपण्यधिष्ण्यानि ।
सस्यं कुड्यं कुप्यं मूल्याघखकव्यकाव्यानि ॥ १८ ॥

हर्म्यं तूर्यं सैन्यं पिच्छकवचबीजनामरोमाणि ।
यादो लान्तशतादीनि धातुनैकाधिकरणं च ॥ १९ ॥

सारं न्याय्ये धर्ममपूर्वनिमित्ते समे विभागेऽर्धम् ।

## अथ पुल्लिङ्गप्रकरणम्

असमाहारे द्वन्द्वः पुंसि भवेदश्ववडव इति ॥ २० ॥

णघञज्घननङ् घोः किरिमा विषवातारिपङ्कनिर्यास- ।
स्वर्गसुरासुरवत्सरऋतुमाससमुद्रपुरुषाहः- ॥ २१ ॥

कण्ठोष्ठकेशदन्तस्तनगुल्फकपोलनखभुजात्माभ्र- ।
क्रतुमानखड्गगिरिशररश्म्यभिधानानि धान्यानि ॥ २२ ॥

कटणथनपभमयरषसशब्दनसोतो हरिद्रुरुद्रमुत् ।

अर्घौ वेमैकेषां विड्वणिजौ दुन्दुभिग्रन्थी ॥ २३ ॥
पाण्यञ्जलिमणिसारथिद्दत्यृषिवस्त्यतिथिकुक्षिरविराशिं ।
ध्वनिमुनिकलिबलिकेलिक्रिमिकपिकविवह्निवृष्ण्यग्नि ॥ २४ ॥
शङ्खौघशङ्कुपुङ्खतरङ्गमृदङ्गाः समुद्रयुगपूगाः ।
मञ्चध्वजगजपुञ्जा नाडीव्रणबल्बजा लाजाः ॥ २५ ॥
ह्रदकन्दकुन्दबुद्बुदजनपदशब्दान्तकुन्तदूतमठाः ।
धूर्तमुहूर्त्तव्राता हस्ताहवपुस्तसंग्रामाः ॥ २६ ॥
गण्डकरण्डवरण्डाः षण्डः शुण्डः शिखण्डगुडमण्डाः ।
गेहस्तम्बनितम्बाः कफरेफकटाहनिर्यूहाः ॥ २७ ॥
आत्माश्मानौ पाप्मा श्लेष्मोष्मस्कन्धबन्धदारार्थाः ।
सीरौदनरात्राह्वाहापाङ्गाः पल्लवो मेद्रः ॥ २८ ॥
वृत्रामित्रछात्राः पुत्रो मन्त्रो दशास्तु वत्सस्य ।
वंशांशपुरोडाशप्राग्वंशास्तण्डुलस्तरलः ॥ २९ ॥
कम्बलचषाल[भृ]मलकललतालकुसूलदेवला वृषलः ।
मुसलोपलैकीलास्तूलो वाकप्रभृतयश्च ॥ ३० ॥

## अथ स्त्रीलिङ्गप्रकरणम्

ईदूदन्तं स्त्री स्त्रीभूविद्युद्वल्लिदिक्सरिन्नाम ।
गायत्र्यादीत्राण्यङ्गं नौस्तल्मिन्यनि स्त्र्युक्ताः ॥ ३१ ॥
विंशत्याद्या नवतेः प्रियङ्गुसरयूडुतनुकुहुस्नायु ।
रज्जूरुधेनु दुन्दुभिरक्षे रुचिशानिखनिमेनि ॥ ३२ ॥
कुटितुटिदीधितिकाकणिरात्रिछविनीविवेणिपेश्यश्रि ।
राज्याजिदर्विपङ्क्तिप्रवेणिनिश्रेणिकृषिकोटि ॥ ३३ ॥
धूलिवलिनालिशष्कुलिपाल्योषधिशक्तिशुक्तिकिकिवेदि ।
स्थालीवापीवर्तिविपणिकाञ्चीवीचिवीथि दरी ॥ ३४ ॥

मारी भेरी सूची वाण्यटवी भारती मुषुण्डी ज्या ।
माण्ड्यालि मञ्जरी खारी लक्षा मानिका शम्या ॥ ३५ ॥

जङ्घा पामा सीमा सिरा गदा नासिका शिखा ज्योत्स्ना ।
वीणा तूणा घोणा तृष्णा कृष्णा घृणा धिषणा ॥ ३६ ॥

शाला माला वेला दोला फेला तुला शिला लीला ।
हेला लाला त्रेतैला रथ्या मन्दुरा मधुरा ॥ ३७ ॥

मदिरा कृसरा रसना शिरोधरा वागुरा सुरा वर्षाः ।
प्रतिसरया प्रतिसिरया शर्करया वालुका सिकता ॥ ३८ ॥

आरा हारा कारा तारा धारा भिदा छिदा मेधा ।
रेखा विदा गुहावपत्रसाक्षियाक्षिपमृजा लेखा ॥ ३९ ॥

चूडा पीडा क्रोडा घाटा घण्टा जटा सटा खट्वा ।
यात्रा मात्रा भस्त्रा दंष्ट्रा ग्रीवा वरत्रेरा ॥ ४० ॥

छाया माया पेया दया बलाका कशेष्टकेषीका ।
मुक्ता भम्भा सेना समा सभा पिण्डिका पृतना ॥ ४१ ॥

जिह्वा स्पृहा स्फुलिङ्गा मञ्जिष्ठा रोचना कुथा कन्था ।
मञ्जूषा गण्डूषा मूषा सास्ना स्नसा रास्ना ॥ ४२ ॥

शाखा शिखा शलाका कक्ष्या स्वाहा स्वधा सुधा गोधा ।
यूकोल्का कक्षा क्षपा निशा मेखला लाक्षा ॥ ४३ ॥

योग्या लता पताका शरद्दरदृषदुपानहः संपत् ।
विपदापत्प्रतिपत्संसत्परिषत्समित्क्षुन्मुत् ॥ ४४ ॥

संयत्प्रावृड्विप्रुद्त्वृट्त्विड्नुड्विड्वणिक्सुमनसाशीः ।
भारच्छर्दिर्गीर्धूः पूर्द्वौर्द्वार्वाक्त्वक्स्फग्रुक्स्रक्स्रुक् ॥ ४५ ॥

पात्रादिवर्जितादन्तोत्तरपदको द्विगुः समाहारे ।
अन्नाडन्तान्तो वा, नपुंसकं, ङेर्थसो गुणिवत् ॥ ४६ ॥

## अथ स्त्रीपुंसलिङ्गप्रकरणम्

स्त्रीपुंसेऽशनियोनिश्रोण्यूर्मिगविपुधिमणितरण्यरणि ।
तुटियष्टिमुष्टिपाटलिमरीचिमषिवस्तिशाल्मलयः ॥ ४७ ॥

कर्कन्धुसिन्धुबाह्विषु कण्ड्वाणी मृत्युकिष्कुतिथिरेणु ।
आपत्यतद्धितो,

## अथ स्त्रीक्लीबलिङ्गप्रकरणम्

ऽर्चिः स्त्रीनपि

## अथ पुंनपुंसकलिङ्गप्रकरणम्

नपि पुंसि चार्धर्चः ॥ ४८ ॥

मधुसीधुकमण्डलुसक्तुसानु षष्टीषुरेणुदार्वपरे ।
मोदकतटाकमस्तकसरकाढककण्टकानीकम् ॥ ४९ ॥

वर्चस्कटङ्कचषकपिटकशाकपिनाकशूकवल्मीकम् ।
तण्डकविटङ्कनिष्कफलकपङ्काः कल्कशुल्के च ॥ ५० ॥

मूषिकनिदाघमञ्चकनखपुङ्खविडङ्गशृङ्गमुद्योगः ।
व्रजकुञ्जकूर्चपुच्छध्वजकपटकवाटकुटकूटाः ॥ ५१ ॥

कर्वटकिरीटपिष्टं कवटावटनिकटशकटमठनीडाः ।
दण्डाण्डमण्डखण्डा कुक्कुटदृढकाण्डरणचरणाः ॥ ५२ ॥

कर्षापणबाणव्रणसुवर्णतृणवर्णवारवाणानि ।
द्रोणस्वर्णौ भूषणतोरणमपराह्णघृतभूताः ॥ ५३ ॥

वृत्तक्ष्वेलितलोहितपलितैरावतशतायुतप्रयुताः ।
बुस्तवसन्तौ हस्तः पुस्तो यूथद्वियूथौ च ॥ ५४ ॥

गूथप्रोथौ तीर्थः ककुदार्बुदयोधमौषधकबन्धौ ।
अष्टापदायुधदिनस्थानासननलिनपुलिनानि ॥ ५५ ॥

खलिनसमानद्वीपिनचन्दनशतमानमानशयनानि ।
स्तेनापिधानयौवननिधनविमानौदनवितानाः ॥ ५६ ॥

उद्यानयानकुणपकुतपविटपं शूर्पमण्डपद्वीपाः ।
बिम्बं जृम्भं सङ्गमदाडिमगुल्माश्रमक्षेमाः ॥ ५७ ॥

ब्रह्मोद्यामं हेमकुसुमकुट्टिमकर्मनामलोमहिमम् ।
गोमयकषायमलयाव्ययवलयहिरण्यकवियानि ॥ ५८ ॥

संख्यारण्यं शल्यं विहारपुरचक्रतोमराङ्गाराः ।
क्षीरान्धकारशेखरशिखरोशीरातिखरवप्राः ॥ ५९ ॥

प्रतिसरसहस्रराष्ट्रं वज्रसमरतिमिरपारवाराद्राः ।
कान्तारजठरकन्दरशरीरकेदारदरवस्त्रम् ॥ ६० ॥

सूत्रं पात्रं पत्रच्छत्रपवित्राणि वक्त्रनेत्रमलाः ।
मण्डलतमालवल्कलमृणालनलमुसलबलवालाः ॥ ६१ ॥

शूलपलालचषालोत्पलखण्डलपूलशकलफलमुकुलाः ।
नीलप्रवालकुण्डलशालकमलशीलमूलानि ॥ ६२ ॥

मङ्गलनिगलकपाला हलतैलविशालपार्श्वपात्रीवाः ।
रावशरावौ सैन्धवपूर्वप्रग्रीवगाण्डीवाः ॥ ६३ ॥

काशाकाशकुशाङ्कुशकोशकलशकर्षवर्षविषयूषा- ।
मिषमाषकरीषरसाम्बरीषकार्पासनिर्यासे- ॥ ६४ ॥

त्कसचमसकासमासोपवासदिवसानृकंसगृहपट्टाः ।
देहोऽप्सु शङ्खपद्मौ स्वतो द्विधैतेऽर्थतः केचित् ॥ ६५ ॥

## अथ त्रिलिङ्गप्रकरणम्

त्रिषु शृङ्खलवल्लूरविषाणहरीतकविभीतकामलकाः ।
भल्लातकतटपात्राः, परलिङ्गं द्वन्द्वतत्पुरुषे ॥ ६६ ॥

अतिवर्त्तन्ते स्वार्थे प्रत्ययकाः प्रकृतिलिङ्गवचनानि ।
प्रकृतिर्न निवासादिषु , हरीतकीत्यादिका व्यक्तिम् ॥ ६७ ॥

वचनं तु खलतिकादिर्बहुविषयोत्तरपदं समासेऽनुः ।
साम्याद्गुणवचनानामाश्रयतो लिङ्गवचनानि ॥ ६८ ॥

स्त्रीपुंनपां सहोक्तौ परं न डतियुष्मदस्मदन्संख्याः ।
लिङ्गे सुङ्धात्वव्ययवाक्यमवचनं च बहुलमिदम् ॥ ६९ ॥

वाग्विषयस्य तु महतः संक्षेपत एष लिङ्गविधिरुक्तः ।
यन्नोक्तमत्र सद्भिस्तल्लोकत एव विज्ञेयम् ॥ ७० ॥

शाकटायनकृतं लिङ्गानुशासनं समाप्तम्

## NOTES

Verse

१. त्वाद्या त्वाद् बहुलम्—"भावे त्वतल्" इति त्वप्रत्ययादारभ्य आ "ब्रह्मणस्त्वा" इत्यतस्त्वप्रत्ययाद् ये प्रत्यया उच्यन्ते, तदन्त बहुल नपुंसक भवति। शुक्लत्वम्, शौक्ल्यम्, द्वैपम्, यौवनम्, सख्यम्, कापेयम्, रामणीयकम्, मानोज्ञकम्, अच्छावाकीयम्, ब्रह्मत्वम्। बहुलमिति किम्? आर्हन्ती, सामग्री, गौपालपशुपालिका, चौरिका, गार्गिकया श्लाघते। क्तानेति तुल्यया सहितया अन आनेत्युभय निर्दिष्ट ग्रहीतव्यम्।

भावग्रहण किम्? कार्यः कटः, कृतः कटः, राजभोजनाः शालयः, आस्थानी भूमिः, दुःपाना यवागूः, व्यतिभवमानो जनः, पेशानो जनः, दुःकरः कटः, सुपटङ्करास्तन्तवः, सुघटङ्करा मृत्, इति कर्मादि यथायथ लिङ्गान्तरमपि प्रतिपद्यते।

२. द्विपथमिति समानाधिकरणः समासः, यथा त्र्यवयवा विद्या त्रिविद्येति। षष्ठीसमासो वा। द्वयोः पन्था द्विपथम् इति। तत्रेदं लिङ्गानुशासनं द्विगौ समाहारे तल्लिङ्गेन सिद्धम्। अव्ययपूर्वपदत्वेऽप्युत्तरपदार्थप्रधाने तत्पुरुष एवेदं वेदितव्यम्। अव्ययीभावे तल्लिङ्गेन सिद्धम्। सख्याव्ययपूर्वपद इति किम्? पथः। "पथनिशीथोच्छिथ" इतिह्युणादिषु थप्रत्ययान्तो निपात्यते।

अथ तत्पुरुषोऽनञ्कर्मधारयः—अधिकारोऽयम्। आ सेना सुरा छाया शाला निशा च वेत्यतो यदित ऊर्ध्वम् अनुक्रमिष्यामस्तत्र नञ्समासं कर्मधारय च वर्जयित्वा योऽन्यस्तत्पुरुषः स नपुंसकं भवतीति तदुपस्थितं वेदितव्यम्। अथेत्यधिकारार्थो मङ्गलार्थः पादपूरणार्थो वा।

स्त्रीसभम्। दासीसभम्। दासीसमूह इत्यर्थः। अशालेति किम्? स्त्रीसभा स्त्रीशालेत्यर्थः। अनञ्कर्मधारय इति किम्? असभा, परमसभा।

३-४. राजसभा। नरसभा। इष्टकासभा।

आदावुपक्रमस्योपज्ञानस्य च प्राथम्ये विवक्षिते। कुरुराजोपक्रमः, कुरुराजोपक्रममिह दानम्। कुरुराजेन श्रेयसा प्रथमं प्रवर्तितमित्यर्थः। शाकटायनस्योपज्ञा शाकटायनोपज्ञमिदं शब्दानुशासनम्। शाकटायनेन प्रथमं ज्ञात ततः पूर्वं प्रवृत्तमित्यर्थः। आदाविति किम्? चैत्रोपक्रमः प्रासादः, मैत्रोपज्ञो रथः। सुखग्रहणार्थं पुण्याहशब्दं केचित् अर्धर्चादिष्वपि पठन्ति।

रात्र इति कृतसमासान्तो रात्रिशब्दः सख्यायाः परः किल नपुसक भवति । एकरात्रम् । द्विरात्रम् ।

किलेत्यन्येषा अनभिप्रेतता सूचयति । एकरात्रः, द्विरात्रः इत्येवान्ये ।

६. अस्रशब्दो रुधिरार्थः पूर्वेणैव नपुसक सिद्धः । अश्रवर्थार्थ वचनम् ।

७. शुल्कशब्दोऽर्धर्चादिष्वपि पठ्यते । तस्येह पाठो नपुसकस्य प्रचुरप्रयोगतार्थः । एवमन्यत्रापि ।

१३. केचित् कुटीरं पुल्लिङ्ग मन्यन्ते ।

१९. अधर्चादिषु च नामशब्दः, तस्य च नपुसके प्रचुरप्रयोगार्थमिह बचनम् । शतसहस्रावर्धर्चादिषु । लक्षाकोट्योः स्त्रिया पाठः ।

धातुना यत् समाधिकरण तत् क्रियाविशेषण नपुसक भवति । साधु पचति । मृदु पचति ।

२०. ''तानि धर्माणि प्रथमान्यासन्'' ।

२१-२२. ण घञ् अच् घ न नञ् इत्येतत्प्रत्ययान्ताः पुसि भवन्ति । न्यादः ''नौ नच् चाद'' इति नः । पाकः । त्यागः । ''अकर्तरि'' इति घञ् । प्रभवः । प्रश्रयः । ''भूश्रयदोऽच्'' । अर्कः । गोचरः । ''पुन्नाम्नि घः'' । यज्ञः । यत्नः । ''यज्यत्प्रच्छ्स्वप्रक्षो नः'' । विश्नः । ''विच्छान्नञ्'' । घञादिसाहचर्याण्णचोरकर्तरि ग्रहणम् ।

घोः किः पुंसि भवति—आदिः । विधिः । निधिः । वालधिरयम् । घोरिति किम् ? जज्ञिसस्रिचक्रिनेमि ।

२३. वेमन्नित्यय शब्दः पुसि भवत्येकेषामाचार्याणाम् । अन्येषा वेम वेमनी वेमानि ।

२५. शङ्कोः ''नसोत'' इति सिद्धम् । ग्रहणं शतादीनीति नपुंसकत्वबाधनार्थम् । शङ्कुरिति हि चतुर्दशं स्थानमुच्यते । बल्वजाः । लाजाः । बहुवचनेनानयोर्बहुविषयत्वं सूच्यते । प्रायेणेमौ बहुविषयौ ।

२७. मण्डस्यार्धर्चादित्व इह ग्रहण पुंस्त्वप्रचुरप्रयोगार्थम् । एवमन्यत्रापि ।

२८. दारशब्दः प्रायेण बहुवचनविषयः । क्वचिदन्यत्राप्यस्ति ''धर्मप्रजासम्पन्ने दारे नान्यं कुर्वीत'' इति ।

पुण्यरात्रः । वर्षारात्रः । सर्वाह्णः, । पूर्वाह्णः । अपराह्णः । द्व्यहः । त्र्यहः । समासादन्यत्र न सन्ति, समासान्त्ये ह्येतानि रूपाणि ।

२९. दशाः पुंबहुवचनेनास्य बहुविषय दर्शयति । तुशब्दो विशेषणार्थः । व स्त्रस्येति किम् ? इयं हस्तिनो दशा । प्राग्वंशो रूढिरिति पृथगुपादीयते ।

३०. वाकप्रभृतयः—वाकः, अनुवाकः, शयुवाकः, सूक्तवाकः ।

३१. ईदूदन्तम्—श्रीः, लक्ष्मीः, तन्त्रीः, यवागूः, अलाबूः । अय सेनानीः, इद सेनानिकुलम् । अय यवलूः, इद यवलुकुलम् । इति गुणवचनत्वादाश्रयतो लिङ्गं भवति । तल् मि नि अनि इत्येवप्रत्ययान्ताः स्त्रीलिङ्गे भवन्ति । ग्रामाणा समूहो ग्रामता । जनता । शुक्लस्य भावः शुक्लता । देव एव देवता । मि—नेमिः । भूमिः । दल्मिः । वर्मिः । नि—वेणिः । श्रेणिः । श्रोणिः । अनि–सरणिः । वर्तनिः । स्त्र्युक्ताः—ये स्त्रिया विहितास्ते स्त्रीलिङ्गा भवन्ति । इय कृतिः । ह्रतिः । याच्ञा । भवतः शायिका । भवतोऽग्रगामिका ।

३२. षष्टिमर्धर्चादिष्वपि केचित् पठन्ति । शतादीना नपुसकत्व चोच्यते । विंशत्यादिशब्दरूपम् आ नवतेर्नवतिशब्दपर्यन्तं स्त्रीलिङ्गं भवति । इयं दुन्दुभिरक्षः प्रासकः । "दुन्दुभ्या किल तत् कृत पतितया यद् द्रौपदी हारिता" अन्यत्राय दुन्दुभिः ।

३८. वर्षाः—बहुवचनादेशादस्य बहुविषयता दर्शयति । छन्दोऽर्थस्तृतीयानिर्देशः ।

३९. वप क्षिप इति पूर्वेण समाहारद्वन्द्वे ह्रस्वश्छन्दोऽर्थः ।

४१. प्रायेणाय समाशब्दो बहुवचनान्तः, एकवचनान्तप्रयोगोऽप्यस्ति । यथा—"तृतीयस्याः समायास्तु" इति । एवं सिकतासुमनसोरपि द्रष्टव्यम् ।

४५. भिदादीना सम्पदादीना च स्त्र्युक्ता इति सिद्धेः ग्रहणं प्रपञ्चार्थम् । सुमनसा इति तृतीयानिर्देशः सुखपाठार्थं ।

४६. ङेर्थसो गुणिवत् । स इति पूर्वाचार्याणा समासस्याख्या । चतुर्थ्यन्तस्यार्थशब्देन यः समासः स गुणिवत् विशेष्यलिङ्गो भवति । देवदत्तार्थः सूपः । देवदत्तार्था यवागूः ।

४७. मणिशब्दः पुल्लिङ्गाधिकारे पठितः । त्रुटिशब्दश्च स्त्रीलिङ्गाधिकारे । तत् प्रचुरप्रयोगापेक्षं द्रष्टव्यम् ।

४८. आपत्यतद्धितः—औपगवः, औपगवी । कापटवः, कापटवी ।

४९. षष्टि इषु रेणु दारु इत्येतान् अपरे नपि पुसि च मन्यन्ते । इदं षष्टि, अयं षष्टिरिति । अन्ये पुनः षष्टिः स्त्रियामेव । इषुरेणु स्त्रीपुंसयोः । दारु नपुंसक एवेति ।

५३. कर्षापणस्यैव प्रज्ञाद्यानि कार्षापणम्, कार्षापणः ।

५८. उद्यामः—अतः पाठात् आत्व च विज्ञायते । उद्याम इति वा पाठः ।

६५. कंसो नाम पुरुषः ।

गृहशब्दस्य पुंसि बहुवचनान्तस्य च प्रायः प्रयोगः ।

६६. अर्धर्चादिषु पात्रपाठः प्रचुरप्रयोगापेक्षः ।

६७. वचनमिति सख्यायाः पूर्वाचायसंज्ञा । श्रियाः पूः श्रीपुरम् । उदीची भूमिरुदग्भूमम् । ईषदसमाप्तो गुडो गुडकल्पा द्राक्षा । तैलकल्पा प्रसन्ना । पयः-कल्पा यवागूः । वर्षाकल्पोऽयं कालः । ह्रस्वा कुटी कुटीरः । शुण्डारः । शमीरः । कुतुपः । चत्वार एव वर्णाः चातुर्वर्ण्यम् ।

पाञ्चालाना निवासो जनपदो पञ्चालाः । *अङ्गाः ।

वरणानामदूरभव नगर वरणाः । शृङ्गिशाल्मलयो ग्रामः, गोदौ ह्रदौ, तयोरदूरभवो गोदौ ग्रामः ।

हरीतक्या विकारोऽवयवो वा फलं हरीतकी हरीतक्यौ हरीतक्यः फलानि । एवं पिप्पली, काशोटकी, नखरजनी इत्यादि ।

६८. खलतिको नाम पर्वतः । तस्यादूरभवानि वनानि खलतिक वनानीति लिङ्गमतिक्रामत्येव ।

बहुविषया प्रकृतिर्निवासादिषु समास उत्तरपदभूता प्रकृत्यर्थलिङ्गसख्या नातिक्रामति । मथुरा च पञ्चालाश्च मथुरापञ्चालाः । अनुत्तरपद-मतिक्रामत्येव । पञ्चालमथुरे । बहुविषयेति किम्? गोदौ च मथुरा च गोदमथुराः ।

अनुरिति किम्? चञ्चेव चञ्चा मनुष्यः । चञ्चाभिरूपः, वध्रिका दर्शनीयः ।

६९. बहुलमिदम्—यदुक्तं नब् द्व्यच् सन्तमित्यादि तदिद बहुल द्रष्टव्यम् । तेन काकाना समूहः काकम् । पाशाना समूहः पाश्या । गोत्रा । रथकट्या बलिनी । कठाना धर्म आम्नायो वा काठकम् । कालापकम् । इत्येवमादि लिङ्गं विशिष्टप्रयोगानुसारेण वेदितव्यम् ।

## अथ वररुचिलिङ्गविशेषविधिः

यावान् कश्चित्त्रान्तः शब्दोऽत्र नपुंसके हि बोद्धव्यः ।
वर्ज्यं हि पुत्रमन्त्राश्चित्रानेवं गरित्रं च ॥ १ ॥

यात्रामात्राभस्त्रादंष्ट्रा विद्यात् स्त्रियां वरत्रां च ।
ईदूदन्तं यच्चैकाच् शरद्दरद् दृषत् प्रावृषश्चैव ॥ २ ॥

स्थूणोर्णे स्त्रीयोगे स्तो गृहशशपूर्वयोर्नपुंसकता ।
सर्वस्याक्षिनाम्नो जलनाम्नश्चैवं मुक्त्वापः ॥ ३ ॥

जलकुसुमनाम सर्वं नपुंसकं स्यात्पद्मस्तु विभाषया ।
अभ्राद्दतेऽम्बुदाख्या हि केशनखदन्तसंज्ञाश्च ॥ ४ ॥

कण्ठस्तनबाहूनां संज्ञाः पुंसि स्त्रियां भवेद् ग्रीवा ।
पृष्ठललाटांसोदरजत्रूणि नपुंसकानि स्युः ॥ ५ ॥

ऊर्मिध्वन्यञ्जलयः पुंस्योष्ठकपोलगुल्फसंज्ञाश्च ।
घञ्चैरच्च ऋदोरप् च स्याद् बहुलमन्धकारश्च ॥ ६ ॥

प्राण्यङ्गमिदन्तं वस्तिकुक्षिपाणीन् विमुच्य सर्वं स्त्री ।
जङ्घा शिरा स्नुषा नासिका च चूडा वसा चवै ॥ ७ ॥

स्रक्स्रुक्स्फिक्त्वग्वाग्योषितो हि विद्यात् स्त्रियां द्युनावौ च ।
दीधितिमेकां मुक्त्वा रश्म्यभिधानं तु पुंस्येव ॥ ८ ॥

मूर्धोऽक्षतक्षमज्जश्लेष्मात्माश्मयुवपूषभी रहितम् ।
सर्वं द्व्यच्कं नान्तं नपुंसकं पुंसि वा भवेद् ब्रह्मा ॥ ९ ॥

त्रुटिसीमासन्ध्यारात्रयः स्त्रियां धूलिवेणिखार्यश्च ।
पुंसि निशीथो ज्योत्स्ना दया शलाका स्त्रियां नित्यम् ॥ १० ॥

पुंयोगे कर्णहनू नपुंसके श्मश्रुजानुगुदशब्दाः ।
एकाभिधानता स्यादस्राश्रुणोर्नित्यम् ॥ ११ ॥

घुः सकिरुपसर्गपूर्वकः पुंस्यन्योपपदश्च वेषुधिः स्त्री ।
येभ्यो नङ् तान् पुंस्युक्तान् याच्ञां विना विद्धि ॥ १२ ॥

तनुकायशरीराणि स्त्रीपुंनपुंसकेषु जानीहि ।
दधिसक्थ्यस्थीनि स्युर्नपुंसके स्त्री तु कक्षा स्यात् ॥ १३ ॥

सुमनोऽप्सरोरहितमद्व्यच्कमसन्तं तु पुंसि स्यात् ।
द्व्यच्कं पुनर्नपुंसकं प्रकृतादन्यत्र वै जरसः ॥ १४ ॥

पुंसि क्षुरखुरबिन्द्विक्षुपायुमणिकीलकेलिकलिबलयः ।
निघसङ्घोद्घोपघ्नौघविघ्नघर्मार्घवर्णाश्च ॥ १५ ॥

पणगुणगणकणशोणाः किणफणघुणशाणबाणचूर्णाश्च ।
नित्यं हि पुंसि पन्था बाष्पोष्माध्वानश्च विज्ञेयाः ॥ १६ ॥

नपुंसके श्वभ्रतृणरणर्णानि ।
वीणातूणाघोणाघृणास्तु नियतं स्त्रियां विद्यात् ॥ १७ ॥

यदनान्तमकर्तरि तन्नपुंसके विद्व्यनिः स्त्रियामेव ।
यौ भावे णापौ तौ पुंस्युक्तौ मन्युमृत्यू च ॥ १८ ॥

पटपुटकटकुटवटचण्टवाटजूटवटा हि पुंस्युक्ताः ।
अवटखटपट्टकिराटकीटाश्च कूटतटयोश्च नपुंसकता ॥ १९ ॥

घण्टाजटासटानां प्रथमा प्रकृतिर्वसाशिफानां च ।
स्वर्नाम्नां पुंयोगस्त्रिविष्टपं स्यादुभयहीनम् ॥ २० ॥

संवत्सरगिरिमासार्णवर्तुदेवासुराभिधानानाम् ।
नित्यं पुंयोगः स्याच्छरासिपङ्कारिनाम्नां च ॥ २१ ॥

भाः कच्छुकशारज्जिवष्टकाश्च नित्यं स्त्रियामिषीका च ।
विद्युद्दिग्भूम्यभिधानं वल्लीसरितां च विज्ञेयम् ॥ २२ ॥

छायासुरानिशावालुका· स्त्रियां स्युश्चमूकथेराश्च ।
आपत्सम्पद्विपत्प्रतिपत्समिद्विप्रुषश्चैव ॥ २३ ॥

कूशकूबरकुञ्जाङ्कुरकुठारकुन्दकुतुपा हि पुंस्युक्ताः ।
कुलकूलकुङ्कुमानि तु नपुंसकान्येव जानीयात् ॥ २४ ॥

लोहमुखपर्णवनधनसंज्ञाश्च नपुंसके प्रोक्ताः ।
सीरार्थौ पुंस्युक्तावटवी तूक्ता स्त्रियामेव ॥ २५ ॥

राशिपलाण्डुकमण्डलुगड्डुतूलमुहूर्त्तपरशुशङ्कूनाम् ।
दृतिसीधुकङ्कटानां पुंसि च गदितः प्रयोगो हि ॥ २६ ॥

शाला माला दोला वेला फेला शिला तुला लीला ।
सेनालिपालिवलिदद्रुवागुराश्च स्त्रियामुदिताः ॥ २७ ॥

पातालजालमलखलकपालशैवालशीलनालानि ।
चीवरचीरवियन्ति च विद्धि तृतीयप्रकृतिकानि ॥ २८ ॥

मुण्डनितम्बक्षुपगुल्मसान्वङ्कवंशपूगशङ्खरथाः ।
पुंसि स्युर्जघनाम्बरफलमूलाङ्गानि च विमुच्य ॥ २९ ॥

क्षीरोदश्विन्नवनीतवर्षकुण्डाण्डघृतभगगनानि ।
विद्यान्नपुंसकान्योदनश्च पुंसि स्त्रियां ज्या च ॥ ३० ॥

विषसंज्ञा पुंसि विषं नपुंसके स्यात् स्त्रियां तिथिर्वोक्ता ।
अतिथिः पुंसि शकृन्नीतशोणितानीतरप्रकृतौ ॥ ३१ ॥

मुक्त्वा दिनाहनी दिवसनाम पुंसि स्त्रियां त्विड्डुतारा: ।
यानयुगः पुंस्युक्तः स्त्रियां समाश्चैव वर्षाश्च ॥ ३२ ॥

भवति नपुंसकयोगः संख्यापूर्वस्य रात्रिशब्दस्य ।
ससमासस्य तु तस्यैव पुंसि योगं विजानीयात् ॥ ३३ ॥

पुरमधुजगन्ति विद्यान्नपुंसके वा स्त्रियां भवेदर्चिः ।
त्वतलौ नपुंसकस्त्रीविधावहः पुंसि संख्यादिः ॥ ३४ ॥

रुत्वन्ताः पुंसि कशेरुदारुजतुवस्तुमस्तुभिस्त्यक्ताः ।
सग्रन्थिप्रस्था इसुसुष्यन्नन्तानां नपुंसकता ॥ ३५ ॥

पुंसि स्त्रियां च पाटलिगोमुष्ष्यशनिबाहुसिन्धुमणयः ।
आशीर्धूः पुर्धुत्तृङ्गिरः स्त्रियां मुद्रुषौ च ॥ ३६ ॥

शीकरतुषारतुषबुद्बुदफेनौ सतण्डुलापूपाः ।
पुंसि स्युगलिमुक्ताजिदर्विसिकताः स्त्रियामुदिताः ॥ ३७ ॥

अजिनाजिरशैवलनलमृणाळतुहिनोडुपाज्यसस्यानि ।
द्वारास्पदकाष्ठानि च नपुंसकान्येव पटलं च ॥ ३८ ॥

त्रिष्वप्यक्षेष्विन्द्रियसंज्ञा या तां नपुंसके विद्धि ।
शेषाः पुंसि प्रोक्ताः श्रीपिष्टाद्याश्च निर्यासाः ॥ ३९ ॥

विंशतिरा नवतेः स्त्री नपुंसके तालुहृदयकुड्यानि ।
पार्श्वकुकुन्दरविण्यतललवणराष्ट्राणि चावैहि ॥ ४० ॥

क्रोडाघाटाजिह्वाशिरोधराशष्कुलीस्पृहामाया ।
विद्धि स्त्रियां शाखा शिखा कला मेखला रेखा राजिपङ्क्ती च ॥ ४१ ॥

स्नायुश्रद्धोल्काश्च स्त्रियां खट्वा भवेत्त्रेता ।
ताणा वाणा प्राणा विश्वाणा संक्रुणा विकोणा च ॥ ४२ ॥

भयबीजसिध्मपदबर्हशुक्रतक्रसुखदुःखशिखराणाम् ।
विद्यान्नपुंसकत्वमसृगित्यस्य च सदैव ॥ ४३ ॥

पाषाणोपलशृङ्गारप्रस्थभृङ्गारमस्तकस्तबकाः ।
रूपं मुक्त्वा शब्दस्पर्शरसगन्धादयश्चोक्ताः सदा पुंसि ॥ ४४ ॥

शेखरयूपपुरोडाशकूपसूपलवशष्पाः ।
धर्ममयवासोदशादाराः पुंसि बहुता चैषाम् ॥ ४५ ॥

मांसविवराभिधानं नपुंसके विद्धि तीर्थतुण्डे च ।
यवमाषाद्याः पुंसि प्रियङ्गवश्च स्त्रियामेव ॥ ४६ ॥

पल्लव् उक्तः पुंसि तु नपुंसके किसलयं स्त्रियां लाक्षा ।
ऋग्रोचना पिण्डिका कण्डूः क्षपा चैव ॥ ४७ ॥

कललकफपूयकुल्माषकल्ककल्पगेहमखलौहित्याः ।
जर्जरपुङ्खचषालाश्च पुंसि कटाहमत्स्यौ च ॥ ४८ ॥

शवपलकतल्पसद्मबडिशामिशनिमित्तपित्तचित्तानि ।
किल्बिषवृजिने च तथा नपुंसके पीठपापे च ॥ ४९ ॥

बल्बजलाजासूनां पुंयोगः स्याद् बहुत्वं च ।
स्थलशाड्वलशिबिराणां नपुंसके स्त्रियां पृतना ॥ ५० ॥

ईर्ष्या रुचिः स्फुलिङ्गा शय्या (निःश्रेणी) कोटिः कुटी वाणी ।
पेशी वरूथिनी च स्त्रियां कुथा नाडिका कन्था ॥ ५१ ॥

नाड्युपपदं व्रणं पुंसि वृक्षजनपांसुकन्दुकलशाश्च ।
पञ्जरपलितद्वन्द्वाक्षराणि विद्यादितरजातौ ॥ ५२ ॥

मेधारसनानिद्रातन्द्रातन्त्र्यः स्त्रियां समञ्जिष्ठाः ।
मदिरामन्दुराकुसरे स्यातां चाक्षदुन्दुभिश्च ॥ ५३ ॥

धान्यविदलांशुकवितानवलयरत्नमिथुनश्मशानानि ।
बिसतिमिराण्यपि विद्यान्नपुंसकान्यग्रखे चैव ॥ ५४ ॥

पुञ्जाद्रिकोणकरीषकषायपिण्याकगर्भदर्भार्भाः ।
पुंसि स्युः पत्तनशुल्बचापनाम्नां नपुंसकता ॥ ५५ ॥

विडवर्णा स्त्री ज्ञेया सास्नावीथ्यौ च नीविभेर्यौ च ।
मञ्जूषा गण्डूषा मूषा परिषद् गुहा चैव ॥ ५६ ॥

तृष्णाकृपापताकारथ्याकृषयश्च काकिणी चैव ।
एते स्त्रियां भवन्ति प्रतिसीरा धारा च नेमिश्च ॥ ५७ ॥

वर्तुलयुगलच्छलचेलखोलधिष्ण्यार्गलशफानाम् ।
विद्धि नपुंसकभावं पण्यस्य च पिच्छपलयोश्च ॥ ५८ ॥

रयमण्डपनरककपाला गुडमणिमेढ्रदर्दुरकुसूलाः ।
युग्माकाशव्रतशृङ्गवर्जिताः पुंसि मञ्चश्च ॥ ५९ ॥

स्तूपालक्तककर्पासपूर्यकूर्पाससारथितरङ्गाः ।
अलकसमुद्रवराटकनूपुरकङ्कणाः पुंसि ॥ ६० ॥

सैन्यायुधमङ्गलनगरवृन्तहरितालबिम्बमुकुटकुड्मलानि ।
विद्धि तृतीयप्रकृतौ पुंस्यवसथस्तथोद्गीथः ॥ ६१ ॥

दर्पणमृदङ्गजठराः पुंस्युक्ताः कुन्तकुतपधूमाश्च ।
व्रातहृददण्डाङ्कुशकटाक्षसंग्रामविटपाश्च ॥ ६२ ॥

पामा स्त्रियां निगदिता पुंसि वेमा कुणपकूर्चौ च ।
कन्दरयूथप्रोथाश्च वंशरेणुध्वजाश्चैव ॥ ६३ ॥

केदारखण्डप्रशमाश्च पुसि नित्यं कपाटश्च ।
हेला काञ्ची लाला सुधायुधाः स्युः स्त्रियां प्रवेणी च ६४ ॥

हानिर्ग्लानिर्वापीविपणीशार्यश्च वै तथा स्वाहा ।
लक्ष्मीमनःशिलोपानहः स्त्रियां स्थाण्वणुज्वराः पुंसि ॥ ६५ ॥

पुंसि स्यात्प्राग्वंशस्त्रिषु लिङ्गेषु शृङ्खलं विद्धि ।
चमसस्तम्भनिदाघपशुशूकविटकाश्च पुंस्युक्ताः ॥ ६६ ॥

वल्कलकुण्डलहिमचिह्नखलीनककुदगुह्यशुल्कशकलानि ।
तीरोलूखलकवचानि च विद्यादितरजातौ ॥ ६७ ॥

मण्डलकेसरभाण्डोत्तरीयसोपानकल्मषाघानि ।
प्रादेरन्तं च नपुंसके सह कुटुम्बपुलिनाभ्याम् ॥ ६८ ॥

स्थालीसभाजराणां स्त्रीत्वं स्थाल्याश्च वीचिगदयोश्च ।
छविकठ्योर्मञ्जर्या वल्याश्चैवं विजानीयात् ॥ ६९ ॥

शिल्पं छर्दिस्त्वन्नं शमलं मरकतपलालकृच्छ्राणि ।
मन्दिररिक्थे नपुंसके मन्दुरां तु स्त्रियां विद्धि ॥ ७० ॥

कल्कुक्रमिमुन्यङ्गारवप्रग्रहहोमर्षियक्ष्मरफोः ।
मण्डकरण्डवरण्डाश्च पुंसि शपथाम्बरीषौ च ॥ ७१ ॥

मथुरा तनूस्तनूर्वर्तिनी सूची यवागूः ।
सरणीनिकाशाशर्कराः स्त्रियां पुंसि तर्कश्च ॥ ७२ ॥

बन्धुरविषाणयोस्त्रिकं भवेत्पल्वलं तृतीयं स्यात् ।
शकटोशीरकुतूहलशरावबृन्दानि जानीहि ॥ ७३ ॥

यूकोल्काशुक्त्योषधिवर्तिभ्रुकुटयः स्त्रियामुदिताः ।
वाल्मीक्यध्वरनिर्यूहमुस्तकाः पुंसि कुम्भश्च ॥ ७४ ॥

केयूरतलतूर्याङ्गदानि नित्यं नपुंसके विद्धि ।
पुंसि गवाक्षः श्यामा स्त्रियां च भाण्डी भुशुण्डी च ॥ ७५ ॥

भवतोऽपजनोपपदावङ्गपदौ पुंसि नित्यमिमनिच्च ।
वङ्क्षणकोष्ठप्रेषाश्च सह निपातोपसर्गाभ्याम् ॥ ७६ ॥

स्थाविरादीनामणञ्ययत्छढकञ्यक्वुञस्तु यदि भावे ।
कर्मणि वा स्युस्तदैषां नियता नपुंसकता ॥ ७७ ॥

व्रजशूलौ पुंसि नपुंसके च मृधम् ।
कम्बलतोमरमुकुलकन्दुकाः पुंसि भस्त्रा स्त्री ॥ ७८ ॥

आकारेकारान्तं स्थावरं जङ्गमं स्त्रियां भवेन्नित्यम् ।
क्वचिदूकारान्तमपि प्रोक्तं वा पुंसि योनिः स्यात् ॥ ७९ ॥

वाग्विषयस्य च महतः सक्षेपत एष लिङ्गविधिरुक्तः ।
यन्नोक्तमत्र सद्भिस्तल्लोकत एव बोद्धव्यम् ॥ ८० ॥

इति श्रीमदखिलवाग्विलासमण्डितसरस्वतीकण्ठाभरणानेक-
विशरणश्रीनरपतिसेवितविक्रमादित्यकिरीटकोटि-
निघृष्टचरणारविन्दाचार्यवररुचिविरचितो
लिङ्गविशेषविधिः समाप्तः

---

# NOTES

Verse

१. हिशब्दोऽनुक्तसमुच्चयार्थः । छलो नर्तकः ।

२. एकाजिति किम् ? सेनानीः । ग्रामणीः । दरत् ग्रीवास्थानम् । चकारः समुच्चयार्थः । एवकारोऽवधारणे ।

३. जलं काननम् ।

४. पद्मः , पद्मम । उक्त च—

> ''वसन्ते शीतभीतेन कोकिलेन वने रुतम् ।
> अन्तर्जलगताः पद्माः श्रोतुकामा इवोत्थिताः ॥''

ता अम्बुदाख्याः पुसि भवन्ति ।

५. बाहुसंज्ञा तरणः, धरणः, चालन इत्यादि ।

६. इदमन्धकारम्, अयमन्धकारः । तथा चोक्तम्—

> ''नेहागमोऽस्ति शलभस्य न मारुतस्य
> स्नेहक्षयोऽपि न भवेत् प्रथमे प्रदोषे ।
> अव्यक्तवस्तुपुरुषप्रतिबोधितेन
> पारावतेन पतता कृतमन्धकारम् ॥''

७. वस्त्यादि पुसीत्यधिकारात् तेषा पुस्त्वमेव भवति । वसा शोणितविकारः स्नेहश्च ।

८. दीधितिशब्दः स्त्र्यधिकारात् स्त्रिया भवति । तुशब्दः पादपूरणे ।

९. मूर्धोक्षितक्षेत्यादि पुल्लिङ्गाधिकारात् पुसि भवति । अश्मा नीलः ।

१३. कक्षा बाहुमूलम् । अन्यश्च—

> ''जघनाभरणे स्त्रीणा करीणा मध्यबन्धने ।
> अवस्थासु च हर्म्याणा नित्य कक्षा व्यवस्थिता ॥''

१४. सुमनसोऽप्सरसश्च । स्त्र्यधिकारात् स्त्रिया प्रवृत्तिः ।

१५. निघः पर्वतः । उद्घ. प्रशस्तः । उपघ्न आश्रयः पर्वतश्च ।

१६. पणो विंशतिगण्डकः । किणो निकषः । चूर्णः शकलः, खण्ड इत्यर्थः ।

१७. ऋण उद्धारः अधमर्णश्च ।

२३. इरा जलैभूमिः ।

२४. एवकारोऽवधारणे ।

२५. लोहमायसम् । शिरोऽलङ्कारो हलो वा ।

२६. कङ्कटो हस्तिकवचम् ।

२७. फेला भक्तोच्छिष्टं धानाश्च ।

२८. तृतीयस्थाने नपुसकस्य दृष्टत्वात् पातालादीनि तृतीयाप्रकृतिकानि विद्धि ।

३१. इतरप्रकृतौ स्त्रीपुंलिङ्गरहितस्थाने नपुसके ।

३२. दिवसः सूर्यकर इत्यादि ।

३३. एकरात्रम् । द्विरात्रम् । सह समासेन वर्त्तत इति ससमासः, ससमासस्य तु रात्रिशब्दस्य पुसि योग विजानीयात् । यथा—पूर्वरात्रः, अर्धरात्रः, वर्षारात्रः ।

३४. एकाहः । द्व्यहः । पुण्याहम् ।

३५. कशेरुप्रभृतयो नपुंसके भवन्ति ।

३६. धूर्भारः कीलश्च ।

३७. ओसोऽवश्यायः ।

३८. नलं सुवर्णभाजनम् ।

४०. विण्यं द्रव्यम् ।

४२. ताणा सूत्ररचना । वाणा वाणी । प्राणा श्रद्धा । विश्वाणा लीला । संकुणा नासिका । विकोणा नेत्रविशुद्धिः ।

४३. सदैवेति वचनात् भयादीना व्यभिचारः । अयं भयः ।

४४. शृङ्गारो विदग्धता ।

४८. कललो गर्भाशयः । कल्कः सर्षपादीना चूर्णम् ।

५२. नाडीव्रणः । पलितं जरा । इतरजातौ नपुंसके ।

५४. विदलं माषादिकृतम् ।

५८. खोल भग्नभाण्डम् ।

६१. अवसथः परिव्राजकः ।

६२. कुतपः शस्त्रं कालविशेषश्च ।

६४. प्रशमो धान्यच्छेदनः । युधा युद्धम् ।

६५. शाटी कटिप्रावरणम् । सारी पटोलिका ।

६६. प्राग्वंशो यज्ञकुटी। विटकः पिण्डकृतपरिमाणद्रव्यं शौण्डो वा।

६७. शुल्क शून्यस्थानम्, कन्यावित्त वा।

६८. सोपान खण्डखण्डिका।

७१. शपथः प्रत्ययकारणम्।

७२. वर्तिनी काष्ठोद्भव शब्दसाधनम्। सूची मूल पापस्य। निकाशा कर्षविकारः।

७३. त्रिकमिति लिङ्गत्रितयम्। बन्धुरः बन्धुरा बन्धुर उत्तसमासम्।

७४. उल्का सङ्घातद्वय दग्धकाष्ठं च। भ्रुकुटिर्भ्रूभङ्गः पुष्परचना वा। वाल्मीकिः ऋषिः मृत्कूटश्च। निर्यूहश्चन्द्रपाणिः।

७५. भाण्डी भिण्डिपालः।

७८. कण्दुको यानम्। भस्त्रा कमलपत्त्री।

७९. क्वचिदिति किम्? कटप्रूः।

*Madras University Sanskrit Series.*

---

*TAITTIRĪYA-PRĀTIŚĀKHYA with the Bhāsya 'Padakramasadana' by Māhiseya, critically edited with indices for the first time from an original Manuscript by Mahopādhyāya Paṇḍit V. Venkatarama Sharma, Vidyābhūsana. Price Rs 2. Foreign 3 Shillings.*

*Some Select Opinions.*

---

D.O. No. 67|V. C. 30.

*Senate House,*
*Allahabad,*
*17th March,* 1930.

DEAR SIR,

Many thanks for the advance copy of Taittirīya-prātiśākhya. The work appears to have been very carefully done. It is so neat and attractive that one feels tempted to read through it even though he may not understand much of it. The editing has been done with scrupulous care and the index at the end is useful.

Yours sincerely,
(Sd.) GANGANATH JHA.

*Santiniketan,*
*Bengal, India,*
26. 4. 1930.

DEAR SIR,

I have read with pleasure and profit your work and I have not the slightest hesitation in saying that the work is of

great value and I want to congratulate you on the production. This commentary of Māhiseya will undoubtedly throw much light on the Prātiśākhya literature.

Yours truly,
(Sd.) Vidhuśekhara Bhaṭṭācārya.

*University of Edinburgh,*
4, *Crawfurd Road,*
1*st October,* 1930.

Dear Sir,

It gives me pleasure to convey to you my thanks for sending me your edition of the Taittirīya-prātiśākhya with the Bhāsya by Māhiseya. The work appears to have been carefully done, and the indices are welcome and valuable, so that the work forms an appropriate first number for the Madras University Sanskrit Series. I note that you will deal elsewhere with various issues as to the authorships of the Prātiśākhya, etc

Yours very truly,
(Sd) A Berriedale Keith.

161, *Woodstock Road,*
*Oxford,*
*January* 4, 1931.

Dear Sir,

I am writing to send you my thanks for the copy of your edition of the Taittirīya-prātiśākhya with the commentary of Māhiseya, which has reached me through the Registrar of the Madras University. I have read nearly the whole of the book, which gives a rather full account of the rules for reading the Vedic text with clear phonetic explanations. Of course, like other Prātiśākhya texts, it contains a number of interesting matters of detail. The commentary is straightforward, succinct and generally

clear. It is unfortunate that the Ms. is in places imperfect or incomplete The indexes at the end will be useful. . . I shall look forward to your promised second volume containing a critical study of the author and his subject Your system of indexes seems excellent.

(Sd.) F. W. THOMAS.

Prof Winternitz—Your valuable edition of the Taittiriya-prātiśākhya with the Bhāsya of Māhiseya. ..

*LIṄGĀNUŚĀSANA by Harsavardhana with the commentary 'Sarvalaksanā' by Prthivīśvara, critically edited from original Manuscripts, by Pandit V Venkatarama Sharma Price Rs.* 1-8. *Foreign* 2 *sh* , 6 *d*

In the Press.

*VĀJASANEYI-PRĀTIŚĀKHYA with two Bhāsyas by Uvvata and Anantabhatta, edited by Pandit V. Venkatarama Sharma.*

*CRITICAL STUDIES ON KĀTYĀYANA'S ŚUKLA-YAJUR-VEDA-PRĀTIŚĀKHYA by Pandit V. Venkatarama Sharma.*

---

PRINTED AT THE MADRAS LAW JOURNAL PRESS, MYLAPORE, MADRAS